कुर्वन्कवीन्द्रः कवितामतीन्द्रपात्रं कथामात्रमुपाददीत ।
न शर्करा बन्धमुपैति तावद्यावन्न मध्ये निहिता शलाका ॥ ४१ ॥
उद्बूढलक्ष्मीकममूढपौरमितोऽस्ति मोढेरकनामधेयम् ।
पुरं पुरा विश्वसृजा त्रिलोकीशलानिवेशे विनिवेशितं यत् ॥ ४२ ॥
लिलेखिषुः सृष्टिलिपिं विधाता मूर्त्तिं निजां कुण्डलिनीं विधाय ।
यन्निर्ममे बिन्दुमिवेन्दुमौलिदैत्यारिमूर्त्ती च तदस्तरेखा ॥ ४३ ॥
सारैरुदारैः परमाणुभिर्यत्पुरं विरञ्चः पुरतो विधाय ।
ततोऽवशिष्टैर्जगदप्यशेषं यथाविशेषं घटयाञ्चकार ॥ ४४ ॥
स्थानाद् द्विजानामुपभोग्यसारादतोऽस्ति जातः प्रसृतोरुशाखः ।
श्रीमोढनामोढसुपर्ववंशो वंशावतंसो जगतीतलस्य ॥ ४५ ॥
सुधाभुजो वा वसुधाभुजो वा यज्जन्मिनो वा ध्रुवमन्तरेण ।
श्वेतातपत्रं सितचामरे च पारं लभन्ते न कथञ्चनापि ॥ ४६ ॥
तत्राभितस्त्रातसमस्तदीनजनो जिनोपज्ञरहस्यवेदी ।
पुंरत्नमासीद्गुणरत्नजन्मधरा धरादेव इति प्रतीतः ॥ ४७ ॥
श्रीमोढवंशोदयशैलभानोर्यस्मादवाप्याशु वसु प्रभूतम् ।
वनीपकानां करकैरवाणि सङ्कोचमापुः प्रभृतानि तानि ॥ ४८ ॥
यदा ययुस्तं विधिवत्सपर्यामाप्तुं समस्तान्यपि दर्शनानि ।
तद्वेश्मि तस्मिन्कलिकालदोषैरदूषिते नित्यमुवास धर्मः ॥ ४९ ॥
सुतीर्थयात्रागमनार्थिसार्थोपकारसत्कीर्त्तनकल्पनाभिः ।
यदीयतोकान्यपि धर्मकर्मक्षमा रमन्ते स्म गृहाजिरेषु ॥ ५० ॥
दरिद्रलोकार्त्तिदवाम्बुदस्य कान्ताऽभवद्दियुदिवास्य विद्युत् ।
सन्मार्गमुद्योतयति स्म सद्यो या देहिनां दुर्दिनमाक्षिपन्ती ॥ ५१ ॥
पित्रोः पदोपास्तिविधौ सदोजा मुञ्जालनामाजनि तत्तनूजः ।
संसारमालोकयति स्म योऽमुं जालस्वरूपं निवसन्गृहेऽपि ॥ ५२ ॥
समाहितः श्रीहरिभद्रसूरिगुरोर्गिरोपात्तविवेकसम्पत् ।
कथञ्चिदेवानुमतः पितृभ्यामभ्यासदज्जैनमतव्रतं सः ॥ ५३ ॥
पूर्णः समग्राभिरसौ कलाभिः क्रमेण भावीति गुरुर्विभाव्य ।
तं प्रीतचेताः किल बालचन्द्र इत्याख्यया दीक्षितमभ्यधत्त ॥ ५४ ॥
अधीतविद्यं तमथ क्रमेण समारुरुक्षुर्दिवमायुषोऽन्ते ।
न्यवीविशद्विश्वनमस्यपादः स्वस्मिन्पदे श्रीहरिभद्रसूरिः ॥ ५५ ॥

चौलुक्यभूपालकिरीटपद्मरागारुणोद्योतितपादपद्मः ।
निच्छद्मविद्याकुलसद्म पद्मादित्यस्तदध्यापयिता बभूव ॥ ५६ ॥
वादीभपञ्चाननदेवसूरिगच्छैकदुग्धोदधिशीतरश्मिः ।
मुनीन्दुरस्योदयसूरिनामा बभूव सारस्वतमन्त्रदाता ॥ ५७ ॥
अथैकदा विश्वविहङ्गवंशोत्तंसेन हंसेन समुह्यमाना ।
भासां भरैः सम्भृतशारदाभ्रशुभ्रैः ककुब्भासमदभ्रयन्ती ॥ ५८ ॥
तुषारभासाऽऽतपवारणेन विराजिताऽऽकारवतीव राका ।
संवर्गिता स्वर्गिवधूभिरारात्ताराभिराराङ्कमुपागताभिः ॥ ५९ ॥
स्ववीरनारीधुतचामरालीमिलन्मरालीकुलसङ्कुलश्रीः ।
गङ्गेव मूर्त्ताऽनिलनर्त्तितोर्मिचलानि चेलानि समुद्वहन्ती ॥ ६० ॥
नितान्तमन्त्याक्षरिकानवद्यैः पद्यैश्च गद्यैश्च नवोक्तिहृद्यैः ।
अनुक्रमेणोभयपार्श्वगाभ्यां संस्तूयमाना शिवकेशवाभ्याम् ॥ ६१ ॥
मुरारिनाभीनलिनान्तरालनिलीनमूर्त्तेरलिनिर्विशेषम् ।
आकर्णयन्ती श्रुतिमुञ्जकुञ्जसमानि मामानि चतुर्मुखस्य ॥ ६२ ॥
कण्ठाद्रिफुङ्कारविमिश्रशुण्डासुङ्कारचित्रीकृतचीत्कृतानि ।
सुचारुचारीणि सुहस्तकानि गणेशनृत्यानि विलोकयन्ती ॥ ६३ ॥
वीणाक्वणाकृष्टमृगानुरोधान्मृगाङ्कमायातमिवाधिशीर्षम् ।
छत्रीं दधानस्य सुधाशनर्षेः स्फीतानि गीतानि विचारयन्ती ॥ ६४ ॥
सुरासुरैः स्वस्वमनोमतार्थोपलम्भसंरम्भकृताभियोगैः ।
तीरावनीकल्पितधोरणीकैः क्षीरोदवेलेव निषेव्यमाणा ॥ ६५ ॥
शरत्कुहूधिष्ण्यसमूहगौरामेकत्र हस्ते स्फटिकाक्षमालाम् ।
दातुं नतेभ्यः कवितालतायाः सुबीजराजीमिव धारयन्ती ॥ ६६ ॥
करे परस्मिन्प्रणतार्त्तलोकदारिद्र्यकन्दैकनिषूदनाय ।
प्रसह्य बन्दीकृतपद्मवासानिवासमम्भोरुहमुद्वहन्ती ॥ ६७ ॥
अन्यत्र पाणौ विकचारविन्दसमापतद्भृङ्गविघट्टनेन ।
वीणां रणन्तीं नमतोऽनुवेलं निवेदयन्तीमिव धारयन्ती ॥ ६८ ॥
विद्यात्रयीसर्वकलाविलाससमग्रसिद्धान्तरहस्यमूर्त्तेः ।
वाग्वीरुधः कन्दमिवेतरस्मिन्हस्ताम्बुजे पुस्तकमादधाना ॥ ६९ ॥
सारस्वतध्यानवतोऽस्य योगनिद्रामुपेतस्य मुहूर्त्तमेकम् ।
स्वप्नान्तरागत्य जगत्पुनाना श्रीशारदा सादरमित्युवाच ॥ ७० ॥

(त्रयोदशभिः कुलकम्)

हे वत्स ! सारस्वतकल्पक्लृप्तैरेतैरलं ध्यानविधानयत्नैः ।
आबाल्यतः सम्भृतयाऽऽतिमात्रं भक्त्यैव ते तोषमुपागतास्मि ॥ ७१ ॥
यथा पुराऽऽसन्किल कालिदासमुख्या मनीषानिधयः कवीन्द्राः ।
ममौरसी भक्तिवशीकृतात्मस्तथासि वत्स त्वमपि प्रसूतिः ॥ ७२ ॥
इत्थं स वात्सल्यमतुच्छमिच्छानुरूपमच्छेतरतुष्टिपुष्टम् ।
उदीर्य देवी सपरिच्छदाऽपि गिरोऽधिभूः क्वापि तिरोबभूव ॥ ७३ ॥
सोऽहं सरस्वत्यसमप्रसादसम्पादितानल्पकवित्वरीतिः ।
काव्यं सुधास्वादुरसं वसन्तविलासमित्येतदुदाहरामि ॥ ७४ ॥
श्रीवस्तुपालाङ्गभुवो नवोक्तिप्रियस्य विद्वज्जनमज्जनस्य ।
श्रीजैत्रसिंहस्य मनोविनोदकृते महाकाव्यमुदीर्यते ह ॥ ७५ ॥
नले च रामे च युधिष्ठिरे च वशीकृता यैः कवयो गुणास्ते ।
श्रीवस्तुपाले स्म वसन्ति सम्प्रत्यतस्तदीयं कवयामि किञ्चित् ॥ ७६ ॥

साम्राज्यं यदशिश्रियद्भुवि रणे यद्वैरिणोऽदुद्रवद्
यद्द्रव्यौघमशुश्रवद्गुरु रणाधीनेषु दीनेषु च ।
यत्पुण्यस्थितिमुच्चकैर्व्यरचयद्विश्वे वसन्तः कृती
तद्भूमोऽस्य गुणैः प्रविश्य हृदयं येनोपरुद्धा वयम् ॥ ७७ ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये प्रस्तावनासर्गः प्रथमः ।

पृथ्व्या मेरुमहीधरस्य पयसा पीयूषपाथःपते-
स्तेजोभिः परमात्मनश्च मरुता कल्पद्रुमालीभुवा ।
आकाशेन च पाञ्चजन्यकुहरस्यैतैरुपात्तैर्मह-
द्भूतैः पञ्चभिरेष पङ्कजभुवा श्रीजैत्रसिंहः कृतः ॥

---

## द्वितीयः सर्गः ।

अणहिल्लपाटकमिति प्रथितं पुरमस्ति निर्जितमहेन्द्रपुरम् ।
कलहायते न सह शारदया कमलाऽत्र वासरसलोभवती ॥ १ ॥
सुरसद्मकेतनपटैर्यदहो घृतधूपधूमकलिकाक्षरकैः ।
भुवि दत्तपत्रमिव भाति जगत्पुरमण्डलीविजयकेलिकृते ॥ २ ॥
अतिशायिता निजनिजेशमतान्यधिरोपितुं सुरगृहाणि मिथः ।
इह घण्टिकाक्वणितराज्यपदैर्ध्वजहस्तकैश्च विवदन्ति किल ॥ ३ ॥

सुरसद्महेममयदण्डकरोन्नमिताम्बरस्य बत यस्य बभुः ।
उपरिक्षरत्सुरसरित्सलिलप्रकटाः कटध्वजपटाः परितः ॥ ४ ॥
उपरि स्थितेन भवता जगती कथमुद्धृतेयमतिवासुकिना ।
इति यत्र भूपमभिधातुमना इव भूभृतः प्रचुरचैत्यमिषात् ॥ ५ ॥
इह शातकुम्भमयकुम्भरुचा तिमिरं निरासि किमु तापयसे ।
इति यत्र चैत्यनिवहः परतः कुरुते रविं तरलकेतुकरैः ॥ ६ ॥
हरताण्डवाभिनयमातनुतेऽगरुधूपधूमगजचर्मधरम् ।
यदुदारदेवकुलमौलिचलद्ध्वजपाणिभिः सह लयैः शतशः ॥ ७ ॥
कृतिभिः कृतं सुकृतसेवधयः प्रकटा इवात्र कटरे कलशाः ।
सुरसद्ममूर्द्धसु विभान्तितमां पवनोल्लसद्ध्वजभुजङ्ग्युजः ॥ ८ ॥
प्रतिबिम्बिताः स्फटिकभूमितटे सुरसद्मनां तरलकेतुपटाः ।
ग्रसनाय पन्नगधिया मिलतां दलयन्ति दन्तमिह सर्पभुजाम् ॥ ९ ॥
प्रियपाणिभिर्ध्वजविलोलतमैरुपभुज्यमानविभवा विवरुः ।
सुरसद्महेमकलशा इव यन्मृगलोचनाजनकुचाः सुरुचः ॥ १० ॥
समयज्ञ एव मलिनोऽपि तमःप्रसरः सदा यदनुचारिपदम् ।
इह कामिनीवदनशीतरुचामुररीकरोति कबरीमिषतः ॥ ११ ॥
मणिकुट्टिमास्फलितमृक्षगणं प्रसमीक्ष्य यत्र निशि भीरुजनः ।
त्रुटितात्महारगुलिकाभ्रमतो हृदयं निभालयति हस्ततलैः ॥ १२ ॥
अभिमन्य यत्र निशि वासगृहे शयिता पराङ्मुखतयापि वधूः ।
स्फटिकाग्रभित्तिगतबिम्बतया कृतसम्मुखेव दयिते दयितम् ॥ १३ ॥
यदगारमौन्मिमणिभित्तितलप्रतिबिम्बितो निशि निशारमणः ।
कृतमण्डनस्य दयितैः प्रमदात्प्रमदाजनस्य मुकुरीभवति ॥ १४ ॥
प्रतिरूपकाणि मणिभित्तिमये प्रसमीक्ष्य नास्ति रह इत्यहह ।।
मदनातुरेऽपि दयिते दयिता त्वरते न यत्र निशि केलिकृते ॥ १५ ॥
कुमुदोपहारविशदच्छविभिर्विकसद्गवाक्षनयनैः परितः ।
हरिदङ्गनाजनमुखानि मुखं परिवीक्ष्यमाणमिव यद्रुरुचे ॥ १६ ॥
अभितुङ्गवेश्म शिखरप्रकरस्खलनानिपातभयतः परितः ।
निशि यत्र यान्ति विलसत्तडितो धृतदीपिका इव घना नभसि ॥ १७ ॥
प्रतिरूपकैः कुतकमेकमहो प्रिययोर्विचित्रसुरतप्रिययोः ।
प्रतिभाति यत्र मणिभित्तिमयं करणैः सचित्रमिव वासगृहम् ॥ १८ ॥

मुखसौरभभ्रममिलन्मधुपाः परितो भुजङ्गपरिरम्भभुजः ।
पणयोषितो मलयशैललता इव यत्र भान्ति धृतपल्लवकाः ॥ १९ ॥
मणिवेदिकास्फलितमृक्षपतिं कुलटाजनोऽत्र परिवीक्ष्य रुषा ।
दशनार्दितौष्ठमभिहन्ति कराहतिभिर्ममैष कुलशत्रुरिति ॥ २० ॥
हरमूर्ध्न्युपासितसुपर्वसरित्क्रमणं मणीभुवि निशीह शशी ।
श्रयते सतीचरणरेणुमृजाः कथमप्यसौ स्वमकलङ्कयिकीः ॥ २१ ॥
मुनिदेशनावचनमन्त्रपदैर्विकलीकृतोऽपि सततं मदनः ।
इह पादनूपुरझणज्झणितैः प्रमदाजनेन सकलीक्रियते ॥ २२ ॥
रतिमन्दिरागरुजधूमदलैः सदलीकृतैरिव तमःपटलैः ।
दलितेन्द्रनीलदलनीलदलैरिह पादपैरुपवनानि बभुः ॥ २३ ॥
हरनेत्रसंहृतचरोऽप्यचिरादनुजीवितो यदबलानयनैः ।
अभिषिच्यतेऽयमरघट्टघटीकलशोदकैरुपवनीभिरजः ॥ २४ ॥
इह राजवर्त्मनि गजेन्द्रघटामदवारिभिः प्रशमिते रजसि ।
कुसुमोपहारति हरीन्द्रचमूमुखपातिफेनगुलिकानिकरः ॥ २५ ॥
यदुदारशालकपिशीर्षमिलन्मणिमण्डलीपरिवृतं परितः ।
तिलकायते वसुमतीयुवतीवदनेऽन्तरा नृपतिरत्नयुतम् ॥ २६ ॥
दन्दह्यमानागरुधूपधूममालिन्यभीत्येव गवाक्षमार्गैः ।
चित्राणि चित्राश्ममयूखमालामिषेण यत्राशु बहिः प्लवन्ते ॥ २७ ॥
यत्रानुरात्रं किल निष्कलङ्काः सुचारुचन्द्रोपलचन्द्रशालाः ।
प्रतिस्फलच्चन्द्रकलङ्कभीनिभृतो रुदन्तीव गलज्जलौघैः ॥ २८ ॥
सूर्यातपोद्योतितमह्नि वह्निं सूर्याश्ममय्यो गृहशालभञ्ज्यः ।
सङ्क्रान्तदोषाकरलक्ष्मदोषविशुद्धिहेतोरिव साधयन्ति ॥ २९ ॥
निबद्धनीलाश्ममयूखजालयवाङ्कुरग्रासधियाऽवतीर्णैः ।
क्रीडामृगैर्यत्र वधूमुखेन्दुमृगैरिवाराजि गृहाजिरेषु ॥ ३० ॥
यत्र द्विजानां पतिरेति रत्नगृहाजिरेषु प्रतिबिम्बदम्भात् ।
वधूरिव प्रार्थयितुं मुखेन्दुलावण्यलक्ष्मीलवहन्तकारम् ॥ ३१ ॥
कुशीमिवाङ्कं कलयन्निशीन्दुर्यत्र प्रतिच्छन्दतया मणीनाम् ।
भित्त्वेव भित्तीः प्रविशत्यसूर्यम्पश्याङ्गनास्यद्युतिचौर्यहेतोः ॥ ३२ ॥
विशालशालावलभीन्द्रनीलविभाभरैर्यत्र विभावरीशः ।
विच्छायतामेति पुराङ्गनानामिवाननैर्लुण्ठितकान्तिकोशः ॥ ३३ ॥

सौधांशुधौतस्य कृते सुधांशोः [illegible] ।
यत्र प्रतिच्छन्दमिषेण रत्नधिष्ण्येषु धिष्ण्यानि समापतन्ति ॥ ३४ ॥
स्वचन्द्रशालावलभीन्द्रनीलविमानधकारेष्वनिकारवत्सु ।
यत्कामिनः स्वर्गवराङ्गनाभिः समं तदभ्यर्थनया रमन्ते ॥ ३५ ॥
सहंसकैः सारसनादरामैर्महोर्मिकाकङ्कणहारिभिश्च ।
स्त्रैणैर्यदन्तःसदनानि भान्ति बहिर्नदीनां पुलिनानि वातैः ॥ ३६ ॥
ताडङ्कचक्रस्तनगोलवेणीकृपाणदोर्दण्डकटाक्षबाणाः ।
भ्रूचापवत्यः स्मरवीरशस्त्रशालायितं बिभ्रति यत्र बालाः ॥ ३७ ॥
रुणद्धि यस्मिन्परलोकवीक्षां पयोधिवेलाविपुलो नितम्बः ।
समुन्नतं गोत्रमधःकरोति वक्षोजभारः पणकामिनीनाम् ॥ ३८ ॥
(स्वप्रकृतोऽयं श्लोकः)

अनन्तरत्नौषधीभिर्यदट्टैर्विभाति कूटैरिव रत्नसानुः ।
यदन्तरालेषु लसन्ति राजपथा रथाध्वान इवोष्णरश्मेः ॥ ३९ ॥
सीमन्तभृद्राजपथैर्जटाभृत्कुटावलीभिः कलितं च राज्ञा ।
प्राकारशेषाहिपरीतमुर्वीरूपस्य मूर्द्धेव यदष्टमूर्त्तेः ॥ ४० ॥
समन्ततो गोपुरवेधनिर्यन्मार्गारकैरात्तपयोधिनेमिः ।
भ्रष्टस्य चण्डांशुरथादिवोर्वीचक्रस्य यन्नाभिरिवावभाति ॥ ४१ ॥
वासोऽधरं वारिधरं वसानः प्रकाशमाकाशमथोत्तरीयम् ।
सुधासिताङ्गः सुमहाननल्पः शालोऽस्ति जिष्णुप्रणयी यदीयः ॥ ४२ ॥
यद्वप्रमौलौ कपिशीर्षमाला मान्त्री ठकारालिरधोमुखीव ।
करोति भूम्नोद्धतकन्धराणामधोमुखानि द्विषतां कुलानि ॥ ४३ ॥
अङ्गीकरोति प्रतिबिम्बिताङ्गः शालो यदीयः परिखापयोन्तः ।
वैकुण्ठशय्यार्थमुपागतस्य वार्द्धिभ्रमेणाहिपतेरभिख्याम् ॥ ४४ ॥
निक्षिप्य यस्यां तरतीव लोलां विद्वन्नसावात्मसुतां विवेकी ।
एतद्बहिःस्थः परिखामिषेण संरक्षतीवाम्बुनिधिः सदैव ॥ ४५ ॥
यस्याग्रतो दुर्लभराजराजसरो विशालं स्फटिकोज्ज्वलाम्भः ।
क्रोडीकृतैतत्प्रतिरूपमुग्धैरादर्शलीलामुररीकरोति ॥ ४६ ॥
विस्तीर्णशालं च पुरं तदुच्चैर्विशालपालीवलयं सरश्च ।
पयोधिवेलावनमेखलाया भूसुभ्रुवः कुण्डलतां ह याति ॥ ४७ ॥
भोगावतीतोऽप्यमरावतीतोऽप्यतीव रम्यां वहतोऽस्य लक्ष्मीम् ।

वीचीकरोदञ्चितफेनवीतैर्निकत्थितानीव सरः करोति ॥ ४८ ॥
विनिर्जिताशेषपुरश्रियोऽस्य पुरः पुरोभागगतस्तडागः ।
माहात्म्यमम्भोजमुखैरसङ्ख्यैः स्तौतीव भृङ्गीरुतगीर्विलासैः ॥ ४९ ॥

निःशेषान्यपुरीपराभवकरीमालोक्य लक्ष्मीमिति
स्रष्टा यस्य पुरस्य मूर्द्धनि मुदा कोट्टारमस्थापयत् ।
अत्युत्तुङ्गमहीभुजङ्गसुभगप्रासादरूपेण चिद्रू-
पेणाथ कथं तदेकवदनप्रागल्भ्यतो वर्ण्यते ॥ ५० ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये राजधानीवर्णनोनाम द्वितीयः सर्गः ।

दानं मे जनिकृत्तदीयजनकः श्रीजैत्रसिंहाख्यया
विख्यातस्य विभोः करोऽपरमिह श्रीदक्षिणो दक्षिणः ।
तन्मित्राणि सरोरुहाणि कुरुते दैन्यास्पदं सोऽयमि-
त्यन्तर्जातरुषेव यस्य यशसा निस्तेजितश्चन्द्रमाः ॥

---

## तृतीयः सर्गः

कश्चित्पुरा दानवदूनविश्वत्राणाय नारायणवत्पयोधेः ।
स्वयम्भुसन्ध्याचुलुकादुदस्थाद्वीरो विकोशासिविहस्तहस्तः ॥ १ ॥
चौलुक्यनामा कमठेन्द्रखट्वामहाहितूलीतलसन्निविष्टाम् ।
स दैत्यरक्तासवपानमत्तामाधाय भूमीसुमुखीं सिषेवे ॥ २ ॥
तद्वंशदुग्धोदधिशीतरश्मिरस्मिन्पुरे पार्थिवमौलिरत्नम् ।
श्रीमूलराजो रिपुहृत्कुकूलं दिगन्तकूलङ्कषकीर्त्तिरासीत् ॥ ३ ॥
मरन्दवक्षःस्थमहीपतिं यः पुष्पाङ्गजन्मानमुदारसारः ।
लक्ष्यीचकार स्वशिलीमुखानां जैत्रः क्षितौ चैत्र इवावतीर्णः ॥ ४ ॥
चतुर्युताशीतिमितानि भूपतेर्यत्र शीतद्युतिमण्डलानि ।
यद्बाहुराहुस्तरलासिपट्टजिह्वः समित्पर्वणि चर्वति स्म ॥ ५ ॥
श्रीसोमनाथः प्रतिसोमवारयात्रेद्धरेषाहिरयास्य तुष्टः ।
दुरुत्सहानामपि भूपतीनां जयेषु भेजे सहकारिभावम् ॥ ६ ॥
उत्कूमकेशं पदलग्नमग्निमेकं विषेहे विनयैकवश्यः ।
प्रतापिनोऽन्यस्य कथैव का यद्बिभेद भानोरपि मण्डलं यः ॥ ७ ॥

तस्याङ्गजः स्वर्गजशुभ्रकीर्त्तिर्दिगन्तसङ्गीतयशा रसायाम् ।
चण्डासिदण्डक्षतवैरिमुण्डश्चामुण्डराजः प्रभुतामवाप ॥ ८ ॥
भिन्नेभकुम्भोत्थमसौ यदीये संसक्तमुक्ताफलजालमाजौ ।
रराज वैरिव्रजमज्जनोत्था धाराम्भसो बुद्बुदमण्डलीव ॥ ९ ॥
ततो जगज्झम्पन इत्युदात्तकीर्त्तिः स्वयं भूमिमिवावतीर्णः ।
श्रीवल्लभो वल्लभराजनामा बभूव भूपः कुसुमेषुरूपः ॥ १० ॥
यस्य द्विषद्भूपतिवारवारविलासिनीनिःश्वसितानिलेन ।
सिता पताकेव जगत्त्रयैकप्रासादमौलौ नरिनर्त्ति कीर्त्तिः ॥ ११ ॥
ततोऽभवद्दुर्लभकीर्त्तिरस्याः पतिर्भुवो दुर्लभराजदेवः ।
सेवानमद्राजकमौलिमाल्यमधूदकस्नातपदारविन्दः ॥ १२ ॥
वेलावनालीषु निवासिनीनां यद्वेषिभूपालविलासिनीनाम् ।
निःश्वासबाष्पप्रसरैः सरस्वान् शोषं च पोषं च सहाभ्युपैति ॥ १३ ॥
दुर्योधनक्ष्मापतियोधनश्रीः भीमस्ततो भीम इवातिभीमः ।
महीमहेलापतितां प्रपेदे दुष्कर्मकिर्मीरकुलान्तकारी ॥ १४ ॥
अलं विषोढुं विजिगीषुरीषदप्यत्र मात्राधिकमात्मनो न ।
विमानितोऽवन्तिमहीमहेन्दुरितीव भीमस्य भुजेन भोजः ॥ १५ ॥
यशःप्रतापेन्दुपतङ्गनेत्रः श्रिया समं सङ्गरसागरान्तः ।
कृष्णः कृपाणोऽस्य भुजाभुजङ्गतल्पस्थितः कल्पयति स्म केलिम् ॥ १६ ॥
तस्मिन्सुरस्त्रीवदनारविन्दरोलम्बलीलायितमादधाने ।
तदङ्गजो गुर्जरराज्यलक्ष्मीकर्णावतंसत्वमवाप कर्णः ॥ १७ ॥
विलोक्य नारीजनमोहनं यं निजप्रियायामभिशङ्कमानः ।
प्रवेशयन्स्वाङ्गमिमामुमेशः कैलासशैलाग्रमपि प्रपेदे ॥ १८ ॥
सङ्ग्रामवासौकसि कान्तिरोमाञ्चिता सकम्पासिलतावधूटी ।
यत्पाणिसङ्गात्प्रहतेभकुम्भमुक्तागणस्वेदकणानुवाह ॥ १९ ॥
आत्मप्रियासम्भृतशङ्कमिन्द्रमस्मिन्सहस्राक्षयति क्षितीन्द्रः ।
अजायतावारिधिवर्धितोरिदोःश्रीजयः श्रीजयसिंहदेवः ॥ २० ॥
चक्षुर्घटीसङ्घटितैकनासावंशाग्रनिष्पातिभिरश्रुतोयैः ।
माहेश्वरो यः प्रतिपक्षयोषिद्वक्षोजलिङ्गेषु ददौ गलन्तीम् ॥ २१ ॥
धाराधवं कोपकडारवक्त्रं पराभवोन्मीलननीलकायम् ।
विधाय यः पञ्जरभाजमात्मभुजश्रियः केलिशुकीचकार ॥ २२ ॥

यो योगिनीपीठमकुण्ठशक्तिर्जित्वोज्जयन्याः स्वपुरं निनाय ।
किञ्चापरं बर्बरमप्यनैषीद्वेतालमुत्तालभुजिष्यभावम् ॥ २३ ॥
तस्मिन्महश्चुम्बितवैबुधस्त्रीविधूतदोःकन्दलकङ्कणानाम् ।
क्वाणैः सदा तुष्यति पुष्यति स्म कुमारपालो भुवमेकवीरः ॥ २४ ॥
रामादपि न्यायपराऽस्य वृत्तिर्मृगाधिपादप्यतिचण्डमोजः ।
रतिप्रभोरप्यतिचारु रूपं वचः सुधातोऽप्यभवत्प्रधानम् ॥ २५ ॥
केदारसोमेश्वरदेवधाम्नी मनीषिमुख्योऽयमतीव जीर्णे ।
उद्धृत्य दोःस्तम्भसमुद्धृतक्ष्मालोकः स लोकद्वयमुद्दधार ॥ २६ ॥
ह्रासतां हंत परे परस्ताद्दृषन्मयानप्यवनीभृतो यः ।
उत्थाप्य संस्थापयति स्म धर्मोन्निर्मोपितानेकविहारमूर्त्या ॥ २७ ॥
निर्वीरिकावित्तपराङ्मुखोऽपि निर्वीरिकारिक्षितिवित्तमादात् ।
यस्त्यक्तसप्तव्यसनोऽपि सप्तराज्याङ्गसङ्गव्यसनी बभूव ॥ २८ ॥
रणाङ्गणे जाङ्गलकुङ्कणेशकण्ठच्छिदासादितपाटवेन ।
बल्लालमुल्लालयति स्म खड्गदण्डेन यः कन्दुकलीलयैव ॥ २९ ॥
यस्य द्विषत्क्षत्रकुलापकीर्तिभृङ्गीभृतो दिग्वनितावतंसान् ।
यशःप्रसूनप्रसरानसूत करालवाले करवालवल्ली ॥ ३० ॥
तत्र द्युसद्मारविलासिनीनामुद्वीज्यमाने चमरावलीभिः ।
बलीयसामेकनिदर्शनं भूसुभ्रूधवोऽभूदजयाभिधानः ॥ ३१ ॥
क्षरन्मदाम्भोभिरतीव तुङ्गैश्चलद्भिरिन्द्रैरिव कुञ्जरेन्द्रैः ।
यस्याभृत प्राभृतमुद्बलस्य गलन्भिया जाङ्गलभूमिपालः ॥ ३२ ॥
वैकुण्ठनाकाध्वनि यत्कृपाणपट्टे बभुः पुष्करमण्डलानि ।
हताहितानां व्रजतामभुत्र सदा पदानीव करम्बितानि ॥ ३३ ॥
आलेख्यशेषत्वमिह प्रयाते धात्रीं पपौ द्वैधनयीद्धसाराम् ।
श्रीमूलराजः शिशुनापि येन म्लेच्छाधिपोऽकल्प्यत पांशुकल्पः ॥ ३४ ॥
बालेऽपि तस्मिन्कुतुकादिवाङ्कं नीते कृतान्तेन तदीयबन्धुः ।
कुलं रिपूणां हृदि भीमदेव कुर्वन्नृपेन्द्रोऽजनि भीमदेवः ॥ ३५ ॥
व्यर्थीकृताशेषविपक्षिशेषस्तथा जजृम्भे करपल्लवोऽस्य ।
यथार्थिसार्थेन वृथैव धातुर्विकल्पिता कल्पतरुप्रवृत्तिः ॥ ३६ ॥
भोक्तुं शिशुत्वादवनीमनीशेऽमुष्मिन् दिगन्तावनिमण्डलीकाः ।
विटा इवैतामुपभुञ्जते स्म नारीमिवारीणविकारभाजः ॥ ३७ ॥

सत्कञ्चुकी क्षेमविकीर्नृपस्य दृष्ट्वा पराभ्यासपरां महेलाम् ।
ररक्ष तामक्षतवृत्तमर्णोराजश्चुलुक्यो धवलाङ्गजन्मा ॥ ३८ ॥
जजृम्भिरोघाः किल मण्डलीकाः कृतव्यलीका भुवि गूर्जरेन्दोः ।
तानेष निःशेषयति स्म शूरः शूरस्तमांसीव नवप्रतापः ॥ ३९ ॥
किं तत्र चित्रं धवलैर्यशोभिर्जगत्त्रयं यो धवलीचकार ।
विद्वेषिणो यत्कलुषान्वितेने तेनेदमुन्मीलति कौतुकं नः ॥ ४० ॥
तदङ्गजः सङ्गरसङ्गरङ्गकृतारिभङ्गस्मरचङ्गदेहः
अजायत श्रीगिरिशप्रसादप्रासादलीलो लवणप्रसादः ॥ ४१ ॥
चौडो न चूडाभरणं बभार न केरलः केलिमलश्चकार ।
न पाटवं लाटपतिर्लिलेश न मालवीयो निलयं विवेश ॥ ४२ ॥
राढाधिनाथो दृढतां शुशोष हूणश्च तूर्णं प्रणयं मुमोच ।
अन्ध्रो महीरन्ध्रमहीनमस्थात्काञ्चीपतिः श्रीवरमप्यपास्थात् ॥ ४३ ॥
न कौङ्कणः पक्वणमुत्ससर्ज न जाङ्गलो माङ्गलिकैर्जगर्ज ।
पाण्ड्यो न पिण्डग्रहणं चकार न कुन्तलः कुन्तलमुद्दधार ॥ ४४ ॥
वङ्गः कुरङ्गप्लुतिमालिलिङ्ग समाददे नैव कलिं कलिङ्गः ।
चैद्यो निवेद्योऽपि तथा दृशोऽभूद्यज्जैत्रभेरीषु विराविणीषु ॥ ४५ ॥

( चतुर्भिः कलापकम् )

श्रीवीरपूर्वो धवलः क्षितीन्दुरस्याभवत्सूनुरनूनतेजाः ।
नासीरवीरप्रकरासिनीरनिमज्जदूर्जस्वलवैरिवर्गः ॥ ४६ ॥
यत्कीर्त्तिगौर्येण मिथोप्यलक्ष्यौ गौरीगिरीशौ दिवि गौरकान्ती ।
करप्रपञ्चैर्मिलितौ वियोगभीत्यार्द्धनारीश्वरतामुपेतौ ॥ ४७ ॥
भूपाणपट्टो रणपट्टिकेव यस्य स्फुरत्पुष्करकोटिकूटात् ।
हताहृतानामवनीपतीनां निक्षेपकोद्धारलिपिं बभार ॥ ४८ ॥
यः शात्रवक्षोणिभृतां प्रचण्डदोर्दण्डकण्डूं शमयाम्बभूव ।
उच्छेदयामास च मण्डलानि स राजवैद्यो वचसामपन्थाः ॥ ४९ ॥
बभार भूभारमपारसारः सदैकतः श्रीलवणप्रसादम् ।
तमन्यतो यः कलयाञ्चकार वीरं स्वनामप्रतिमप्रवृत्तेः ॥ ५० ॥
स क्षोणिसुश्रोणिधवं स्वराज्यचिन्तायकं कञ्चन कर्त्तुकामः ।
कदाचिदागत्य निशि प्रसुप्तः स्वप्ने समाभाष्यत राज्यलक्ष्म्या ॥ ५१ ॥
हे वीर ! वैरिव्ययवीर मन्त्रिश्चिन्तामयं चेतसि सञ्चिनोषि ।

एषाऽस्म्यहं गूर्जरराज्यलक्ष्मीरेतं विनेतुं भवतः समेता ॥ ५२ ॥
आसीत्पुराऽसीमवसूदयेन विस्रंसिताशेषतमाः क्षमायाः ।
प्राग्वाटनाम्नोन्वयनीरजस्य चण्डद्युतिश्चण्डपनामधेयः ॥ ५३ ॥
चण्डप्रसादस्तनयोऽस्य जज्ञे जिनप्रसादप्रसरोर्जितश्रीः ।
यत्कीर्त्तिसिन्धोरिव चक्षुरिन्दुर्मुक्ताफलानीव च तारकाणि ॥ ५४ ॥
सोमस्ततः सोमसमः समस्तजगज्जनस्तोमसमीहितोऽभूत् ।
देवेषु देवो जिन एव यस्य नाथेषु सिद्धाधिप एव नाथः ॥ ५५ ॥
वाचामधीशेन कृतान्तिकेन प्रीतात्मना यस्य यशःप्रशस्तिम् ।
विधिर्लिलेखाम्बरपट्टिकायां नक्षत्रमालाक्षरमण्डलीभिः ॥ ५६ ॥
सीतामशीतांशुकुलप्रवीर इवैष नान्योऽकृतधर्मभङ्गः ।
अलक्ष्मणाङ्गीकृतगीरविश्वासितो मनीषी बत पर्यणैषीत् ॥ ५७ ॥
ततोऽश्वराजद्युतिकीर्त्तिपूरततोऽश्वराजस्तनयो बभूव ।
मनीषितां गूर्जरनिर्जरेन्द्रमनीषितां प्राप य एक एव ॥ ५८ ॥
स्वमातरं यः किल मातृभक्तो वहन्प्रमोदेन सुखासनस्थाम् ।
सप्तप्रभावत्सयशास्ततानोज्जयन्तशत्रुञ्जयतीर्थयात्राः ॥ ५९ ॥
कूपानकूपारगभीरचेता वापीरवापी सरसीरसीमा ।
प्रपाः कृपावानतनिष्ट देवसौधान्यसौ धार्मिकचक्रवर्ती ॥ ६० ॥
यत्कीर्त्तिसिन्धोः कुमुदाकरत्वममी भजन्ते दिवि तारकौघाः ।
कल्लोलमालीयति चन्द्रिकासौ डिण्डीरपिण्डीयति शीतरश्मिः ॥ ६१ ॥
स तारकीर्त्तिं सुकुमारमूर्त्तिं कुमारदेवीमिह पुण्यसेवी ।
किलोपयेमे द्रुतहेमगौरीमूरीकृताशेषजनोपकारः ॥ ६२ ॥
श्रीमानिहास्ते पुरि वस्तुपालः श्रीतेजपालश्च सुतौ तदीयौ ।
ययोरभूदग्रज एकमल्लः श्रीमल्लदेवः कलिमल्लसल्लः ॥ ६३ ॥
तमोपहारप्रकृती विवस्वच्चन्द्राविवोर्व्यामिह यौ विभातः ।
तयोश्चिरं विश्वधुरं निवेश्य सुखं स्वयम्भूरिव मानय त्वम् ॥ ६४ ॥
स्वप्नान्तरेतत्पुरतः क्षितीन्दोर्निवेद्य सा गूर्जरराज्यलक्ष्मीः ।
यथागतं क्वापि जगाम सोऽपि निद्रां जहौ द्रागरविन्दनेत्रः ॥ ६५ ॥
स्वप्नार्थमर्थिप्रतिपादितार्थः कुर्वन् हृदि प्रीतिपरः पुरस्तात् ।
प्रातः क्रियां शक्रसमः समाप्य स मानदः सम्मदमाससाद ॥ ६६ ॥
पुम्भिः प्रधानैर्नृपतिप्रधानमजूहवत्तावथ सादरं सः ।

समेतयोस्तत्क्षणमेतयोश्च दृष्ट्वा मुखं प्रीतमना बभूव ॥ ६७ ॥
उपायनं तावनपायशक्तेः पुरोऽस्य विज्ञामविधी विधाय ।
प्रणेमतुः पुञ्जितहारयष्टी पुष्टीकृतस्यारिनृपोपदाभिः ॥ ६८ ॥
अथात्मनः श्रीकरणाधिनाथौ कर्तुं कृती तौ पुरतो निवेद्य ।
कुशाग्रबुद्धी कुशलानुशास्तिपूर्वं जगादेति जगज्जयी सः ॥ ६९ ॥
मूर्त्तिर्गुणान् शंसति वो गरिष्ठान् कुलप्रतिष्ठां विनयक्रमश्च ।
शास्त्रज्ञतां गीरवगीतवीतं वयो वयं तु स्तुमहे महेच्छौ ॥ ७० ॥
न यौवनेऽपि स्मरघस्मरत्वं न वैभवेऽपि क्वचनाविवेकः ।
न दुर्जनेऽप्यार्जवविप्लवो यत्तन्निर्मितौ वा विधिना नवेन ॥ ७१ ॥
पुरारिविस्तारितभूमिभारसम्भारिसम्भारितयोरिदानीम् ।
साहाय्यहेतोः पितृपुत्रयोर्नौ हन्तोपधुर्यौ भवतां भवन्तौ ॥ ७२ ॥
पित्रा मम त्रासितवैरिणा या बन्दीकृतादीर्घभुजेन लक्ष्मीः ।
षड्भिर्गुणैस्तामभितो नियम्य चलामपि स्थेमयतां भवन्तौ ॥ ७३ ॥
एतां विनेता समुदीर्य वाचं वाचंयमोऽजायत जातकीर्त्तिः ।
श्रीवस्तुपालस्तु निरस्तदोषः वाक्प्राञ्जलः प्राञ्जलिरित्युवाच ॥ ७४ ॥
स सेवकः सेवकलः कुलीनो विलीनदोषः सुकृती च देव ! ।
प्रसन्नगम्भीर ! भवादृशेन संभाव्यते सुप्रभुणा य एवम् ॥ ७५ ॥
व्यवस्यतां विश्वजयैकवीरशरीरभाजां भवति त्वदाभः ।
स्वामी यदि प्राच्यतपोभिरेव पुंसोऽन्तरं यः सदसच्च वेत्ति ॥ ७६ ॥
विज्ञाप्यसे किन्तु विशेषविज्ञ ! युगत्रयी धन्यतमा जगाम ।
कलिस्त्वसौ यत्र न सेवकेषु कृतं न नाथेषु कृतज्ञता च ॥ ७७ ॥
भूभुजो द्रविणदृष्टयोऽधुना सेवकास्तदनुवृत्तिवृत्तयः ।
तेऽपि तेऽपि कृतदुष्कृतोदया ही परत्र निपतन्ति रौरवे ॥ ७८ ॥

अत्यर्थमर्थमुपढौकितमाद्रियन्ते
तं च प्रभूतगुणितं पुनरर्पयन्ति ।
न्यस्ताः पदे समुचिते गमिताश्च मैत्रीं
शब्दाः कवेरिव नृपस्य नियोगिनः स्युः ॥ ७९ ॥

न्यायं यदि स्पृशसि लोभमपाकरोषि
कर्णेजपानपधिनोषि शमं तनोषि ।
सुस्वामिनस्तव धृतः शिरसा निदेश-
स्तन्नूनमेष मयकाऽन्यथाऽस्तु भद्रम् ॥ ८० ॥

श्रुत्वा वचस्तदिति मन्त्रिपुरन्दरस्य
भूमीपतिः पुलककोरकिताङ्गयष्टिः ।
दिष्ट्यैतयोः स्वयमुदारमुदा सुवर्ण-
मुद्राञ्चितं करसरोजयुगं चकार ॥ ८१ ॥
अजनि कनकमुद्रा साक्षरश्रेणिसान्द्रे
करसरसिजयुग्मे मन्त्रियुग्मस्य तस्य ।
इदमुपचितशालं गूर्जरक्षोणिलक्ष्मी-
कुलगृहमिति निन्ये शासने पट्टिकेव ॥ ८२ ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनाम्नि
महाकाव्ये श्रीकरणपदलाभो नाम तृतीयः सर्गः

गौरी रागवती त्वयि त्वयि वृषो बद्धादरस्त्वं युतो
भूत्या पुण्यजनः सुहृज्जन तव व्यानक्ति शक्तित्रयम् ।
इत्थं कौतुकमीश्वरोऽपि सचिव त्वं जैत्रसिंह ! क्वचित्
कामध्वंसनपाननोपि न रुचिं धत्से द्विजिह्वेषु च ॥ १ ॥

---

## चतुर्थः सर्गः ।

राज्यैकनाड्यां स सुरासुरनीतिविदोस्तयोः ।
राजा योगं समासाद्य वितताव घनोदयम् ॥ १ ॥
इन्द्रोपेन्द्राविव स्वर्गं चन्द्रादित्याविवाम्बरम् ।
तावलञ्चक्रतुरुभौ राज्यं चौलुक्यभूपतेः ॥ २ ॥
श्लिष्टाकृष्टितया हस्तौ बहुश्रुततया श्रुती ।
दीर्घदर्शितया नेत्रे तौ राज्यस्य विरेजतुः ॥ ३ ॥
मुक्तामयौ सदावृत्तरोचितौ श्रवणोचितौ ।
रेजतुर्मन्त्रिणावेतौ राज्यश्रीकुण्डलाविव ॥ ४ ॥
रामलक्ष्मणयोः प्रीतिं नीतिं च गुरुशुक्रयोः ।
सूर्याचन्द्रमसोस्तेजस्तौ सारमिदमारतुः ॥ ५ ॥
तत्र मन्त्रियुगे व्यापिप्रतिमुद्रासिनाशना ।
जनैश्चतुष्करैवेति भूरनन्ता प्रगीयते ॥ ६ ॥
न्यायधौरेयता धर्मप्रीतिबन्धः प्रवीरता ।
तयोरद्वैतमेतानि रामलक्ष्मणयोरिव ॥ ७ ॥

तेजांसि पालयंल्लक्ष्मीहर्म्ययोरसिधर्मयोः ।
तेजःपालः स्वनामैतच्चरितार्थमसूत्रयत् ॥ ८ ॥
निरस्तदूषणे ज्येष्ठे यस्य भक्तिं वितन्वतः ।
अजातशक्तिभेदस्य कथं स्याल्लक्ष्मणः समः ॥ ९ ॥
विनतानन्दनस्यास्य लसतो गोपतेः पुरः ।
सदाचरणरम्यस्यारुणस्तुल्योऽस्तु वा कुतः ॥ १० ॥
पूजाभाजस्त्रयस्त्रिंशद्देवकोटीर्वितन्वतः ।
अकठोरकरस्यास्य तुल्यः कथमिवार्यमा ॥ ११ ॥
कलावतः सुवृत्तस्य सदा नक्षत्रशालिनः ।
अजातलाञ्छनस्यास्य कथमस्तु समः शशी ॥ १२ ॥
कुर्वतोऽनन्यसामान्यं स्वगोत्रं निजसौरभात् ।
अद्विजिह्वाश्रयस्यास्य न तुल्यो मलयद्रुमः ॥ १३ ॥
शीतलस्य मृदोः पादान्वनतः प्रतिभूभृताम् ।
कथमुन्नतमस्यास्य गङ्गापूरः समो भवेत् ॥ १४ ॥
भूरिधारासहस्रेण भूलोकमुपकुर्वतः ।
अकल्मषमुखस्यास्य कथमस्तु समोऽम्बुदः ॥ १५ ॥
बिभ्रतोऽन्तर्जिनं देवं शरण्यस्यावनीभृताम् ।
अलोलप्रकृतेरस्य सरस्वानपि नो समः ॥ १६ ॥
इतश्च लाटभूपालभुक्तौ भूमीविभूषणम्
स्तम्भतीर्थमिति ख्यातमास्तेऽतीन्द्रपुरं पुरम् ॥ १७ ॥
यदुपान्ते श्रितोत्सङ्गामङ्गमङ्गेन पीडयन् ।
महीमहीनमणितां सेवते सरितां पतिः ॥ १८ ॥
विवृतोभयकूलोरुः प्रस्नुत्वरपयोधरा ।
यत्र प्रसूते सत्पोतान् कृमिलेवाङ्गना मही ॥ १९ ॥
नानाद्वीपान्तरायातसांयात्रिकविनिर्मितैः ।
भाण्डकूटैर्यदाकीर्णं क्रीडाशैलैरिव श्रियः ॥ २० ॥
स्फातिनौवित्तकैः कीटकोशकैरिव काननम् ॥ २१ ॥
सकेशैरपि निष्केशैर्धीवरैरप्यधीवरैः ।
राजते यन्नरैश्चारुविग्रहैरप्यविग्रहैः ॥ २२ ॥
सदाकरजपातारः स्फारकेलिमहा बहिः ।

यत्रोद्यानगणोऽन्तश्च व्यरुचन्मानवा नवाः ॥ २३ ॥
एकदा वीरधवलः प्रसह्यासह्यविक्रमः ।
तद्विगृह्य समादत्त लङ्कामिव रघूद्वहः ॥ २४ ॥
श्रीवीरधवलस्योर्वीधवलस्य निदेशतः ।
तत्पुरं वस्तुपालस्तु चिरकालमपालयत् ॥ २५ ॥
द्विपाश्वोपायनैर्द्वीपनृपास्तं श्रीपिविक्रमम् ।
निवेश्य पोतपात्रीषु प्रेषितैरन्वकूलयन् ॥ २६ ॥
हस्तिनं च हयं चैकमैकमिन्द्रस्य दत्तवान् ।
वस्तुपालाय तु पयोराशिरंत्नान्परःशतान् ॥ २७ ॥
करालवालस्थितया नखांशुजलसिक्तया ।
यस्यासिलतया कीर्तिप्रसूनश्रीरसूयत ॥ २८ ॥
मोहादाक्रामतां प्राणापहारेषु पटीयसीम् ।
आचक्राम न कोऽप्युच्चैर्यदाज्ञां भुजगीमिव ॥ २९ ॥
श्रीकान्तेन समुद्रान्तर्दधताऽनिमिषान्मनाम् ।
येन स्तेनद्रुहापारतं निर्वेदत्वं स्वयंभुवि ॥ ३० ॥
विश्वं विश्वम्भराभारं गतपारं बभार यः ।
श्रीमानविष्वक्सेनोऽसौ सदा कमठतां दधत् ॥ ३१ ॥
वराहवपुषा मुख्यमण्डलाग्रैकलीलया ।
जिष्णुना येन भुवने भ्रश्यन्ती भूः समुद्धृता ॥ ३२ ॥
हिरण्यकशिपूद्दामदानं स्वकरलीलया ।
अमुना नरसिंहेन विहितं जगतां हितम् ॥ ३३ ॥
श्रीवामनतयाऽनेन विक्रमाक्रान्तरोदसा ।
अच्युतेन प्रभवता बलिबन्धो व्यधीयत ॥ ३४ ॥
कण्ठे कुठारं व्यापार्य येनारिक्षत्रसन्ततेः ।
भूर्वर्णगुरुसात्चक्रे रामरूपेण मन्त्रिणा ॥ ३५ ॥
हरिसैन्यवता येन लक्ष्मणानुगतात्मना ।
रणे लङ्कापतिर्ध्वस्तो रामेणाकविशार्ङ्गिणा ॥ ३६ ॥
बलभद्रसपक्षश्रीर्वसुदेवाधिकप्रभः ।
योऽवधीद्द्विषतो द्वेषी शिशुपालमपि स्वयम् ॥ ३७ ॥
हृषीकेशश्च्युतक्लेशो विशुद्धसकलस्थितिः ।

विजयी यो न्यधत्तान्तमान्तराणामपि द्विषाम् ॥ ३८ ॥
समुद्गीर्णासिदण्डो यः खण्डिताशेषशात्रवः ।
हयारूढः कलिप्रान्ते कल्कीति कलितो जनैः ॥ ३९ ॥
दाशार्हस्य दशाप्येवमवतारानयं स्पृशन् ।
इदं मृषोद्यं चक्रे यन्न देवचरितं चरेत् ॥ ४० ॥
दौस्थ्यदग्धानयं शाक्रसदृशो दानवारिणा ।
प्रीणयंस्तु केन सदृशो दानवारिणा ॥ ४१ ॥
ससतन्तुभिरस्येशेनामुना षड्गुणैः पुनः ।
वामौ नारिभुवि ख्यातौ स्थूलसख्यौ तथापि तौ ॥ ४२ ॥
यस्य तुष्टस्य रुष्टस्य विदुषां विद्विषामपि ।
धर्मकर्मणि धीरस्य दानकेलिकरः करः ॥ ४३ ॥
वीक्ष्य वक्षसि सानन्दमिन्दिरां कृतमन्दिराम् ।
स्पर्द्धयेव मुखाम्भोजं भेजे यस्य सरस्वती ॥ ४४ ॥
न कलङ्की विधुः किन्तु स्थगयित्वैनमञ्जसा ।
अनीकरजसा यः स्वमसपत्नं यशो व्यधात् ॥ ४५ ॥
निजेनेवोष्मणा तृष्णापरः परयशःपयः ।
यत्प्रतापोऽपिबत्तद्बिन्दवो दिवि तारकाः ॥ ४६ ॥
यस्याभिमुख्यमात्मैव भेजेऽसिप्रतिबिम्बितः ।
रणकेलिजुषः किन्तु द्विषो भूताः पराङ्मुखाः॥ ४७ ॥
प्रतापपावकं प्राप्तकष्टं यस्यारियोषितः ।
परितो दीपयामासुराशु निश्वासमारुतैः ॥ ४८ ॥
यद्बलाक्रान्तिलोलायां भुवि शैलाश्चकम्पिरे ।
दत्तारिनृपतिस्थानराजद्विष्टभयादिव ॥ ४९ ॥
यदनीकरजोजालव्याकुलीकृतलोचनः ।
चक्रन्दानिमिषस्वामी ततः सङ्क्रन्दनः स्मृतः ॥ ५० ॥
विष्णुलोकगताया यत्कीर्त्तेर्विश्रमितुं हरेः ।
श्रवसी विष्टरीभूते तेनासौ विष्टरश्रवाः ॥ ५१ ॥
यत्कीर्त्तिधेनोरुभयकर्णास्तम्भगुणस्थितिः ।
शम्भुरालानतां भेजे तेन स्थाणुरिति स्मृतः ॥ ५२ ॥
असिनभसि कृतोदयः प्रतापद्युमणिरुदग्रशिखोमणेरमुष्य ।

रिपुनृपतियशोहिमाद्रिमभ्रंकषनो मङ्क्षु विलायमाचकार ॥ ५३ ॥
किं ब्रूमो बहुधा मुधा वयममी घोरालधीलीलया
ऽमुष्मिन्शासति गूर्जराधिपगिरा श्रीवस्तुपाले भुवम् ।
मारिः सारिषु नाम वारिषु जडप्रख्यातिरासीद्भृशं
कुग्राहप्रसरः पयोधिषु तथा रोधो मुनीषु ध्रुवम् ॥ ५४ ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि महाकाव्ये मन्त्रिगुणवर्णनो नाम चतुर्थः सर्गः ।

यातश्चेन्ननु यातु कल्पविटपी स्वर्गाद्रिदुर्गावनीं
नैवायाति दृशोः पथि क्वचिदहो मा यातु चिन्तामणिः ।
तस्थौ कामगवी दवीयसि दिवो देशान्तरे तिष्ठतु
क्ष्मापीठेऽस्ति सतः परोपकरणव्यग्रो वसन्तात्मजः ॥

---

## पञ्चमः सर्गः ।

स्पष्टमापदवटे निपतन्ती हन्त दिक्करिकरैरिव साक्षात् ।
मन्त्रियुग्मनृपयुग्मकरैस्तैरुद्धृता धरणिरष्टभिरेव ॥ १ ॥
वीरपूर्वधवलः किल ताभ्यां भूपतिः शुचितमः सचिवाभ्याम् ।
काञ्चनाचल इवार्कशशिभ्यां काञ्चनश्रियमशिश्रियदेषः ॥ २ ॥
सर्वतः प्रतपनो वितमस्कं विक्रमाकलितभूधरमौलौ ।
तेजपालसचिवोऽरुणलीलामाप वीरधवलस्य खरांशोः ॥ ३ ॥
तेजपालसचिवस्य बृहस्पत्युञ्छनं भवतु विष्टपमेतत् ।
उद्दधार जिनमन्दिरमालां मालवीयदलितामभितो यः ॥ ४ ॥
दर्शनानि षडपि प्रसभं दुःकालमर्कटगमिष्यदसूनि ।
अन्नदानकलयाऽतिसुकालोऽजीवयज्जिनमतैकरतो यः ॥ ५ ॥
वीरवीरधवलक्षितिनाथादेशतस्त्रिविधवीरवरेण्यः ।
वस्तुपालसचिवस्तु विदम्भः स्तम्भतीर्थनगरं तदयासीत् ॥ ६ ॥
श्रीवसन्तसमयेन समन्तादेव काननमिवाहितशोभम् ।
स्तम्भतीर्थनगरं तदशेषं दिद्युते भृतपुनर्नवसम्पत् ॥ ७ ॥
पापिभिर्यदधिकारिभिरन्यैस्तामसैरिव हतश्रि बभूव ।
भास्वतेव भुवनं वसुभाजा सम्भृतश्रि तदनेन जजृम्भे ॥ ८ ॥

यत्कुकर्ममलिनीकृतमासीत्कूटधीभिरधिकारिभिरग्रे ।
शासनेन सुधियोऽस्य विशुद्धिं प्राप गाङ्गपयसेव पुरं तत् ॥ ९ ॥
यत्कुधीभिरभितः किल कालस्थानपुम्भिरिव मुक्तमशेषम् ।
तत्र मन्त्रितिलके जयकेलि भ्राजते कृतयुगाचरणेन ॥ १० ॥
पूजयां सततमास तथोच्चैर्दर्शनानि वसनैरशनैश्च ।
एषु शश्वदहमेव मतोऽस्येत्यब्रवीदिह यथा भुवि को न ॥ ११ ॥
यत्र याति नृपवर्त्मनि साक्षादागते मघवतीव बभूवुः ।
जीव नन्द विजयस्व चिरायेत्युच्चकैर्मृगदृशां पुरि वाचः ॥ १२ ॥
तत्तथा विजयसेनमुनीशादेशपेशलमतिः सचिवेन्द्रः ।
धर्मकर्म विततान यथासौ सम्प्रतेरपि जिगाय यशांसि ॥ १३ ॥
काव्यकेलिरसिकः कविवृन्दावर्जनं समतनिष्ट तथासौ ।
मुञ्जभोजयशसां ध्रुवमोजःसञ्चयो भुवि यथा स वृथाऽभूत् ॥ १४ ॥
लूणसाकनृपतेरथ सार्कं मारवैः समभवद्विगृहीतिः
तत्र वीरधवलोऽपि बलोपक्रान्तवैरिनिगमः स जगाम ॥ १५ ॥
स्तम्भतीर्थनिधनेन धनाय शङ्ख इत्यभिधया समयेऽस्मिन् ।
लाटदेशनृपतिर्भृगुकच्छादुच्चचाल चलदश्वबलश्रीः ॥ १६ ॥
मा प्रणश्य रिपवः प्रविशन्तु क्वापि सत्त्वरमितीव तदश्वाः ।
सर्वतः पिदधुरद्रिगुहादिक्काननावटनभांसि रजोभिः ॥ १७ ॥
वाजिराजिखुरखातरजोभिः जृम्भिते तमसि केतनहस्तैः ।
मार्गमामृगयमाणमिवोच्चैः शङ्खभूपतिबलं प्रससार ॥ १८ ॥
दुर्दिनं क्षितिपरागभवं तत् कुम्भिनो मदजलैः शमयन्तः ।
चक्रुरात्मपरयोरनुकूलं लभ्यते न गुरुता परवृत्त्याः ॥ १९ ॥
प्राहिणोदपि च दूतमयं श्रीवस्तुपालसचिवस्य पुरस्तात् ।
सोऽपि निर्भयमुपेत्य चतुर्डा स्वामिवाचिकमुवाच वचस्वी ॥ २० ॥
वर्धसे सचिवराज ! तवाद्य प्राघुणः समरनिर्घृणबाहुः ।
शङ्खभूपतिरुपैति चिरेणोत्कण्ठितस्त्वयि गुणश्रवणेन ॥ २१ ॥
के तव स्तुतिपराः सचिवेन्दो भूतले वद वसन्त ! न सन्तः ।
यस्य शङ्खनृपतिः स्वयमेवोपैति हृष्टहृदयो मिलनाय ॥ २२ ॥
त्वं कृती त्वमसि धन्यतमस्त्वं पुण्यवानसि जने सचिवेन्द्र ! ।
अद्य यस्य गुणिनो गुणगृह्यः शङ्खभूपतिरुपेष्यति गेहम् ॥ २३ ॥

अथ वीरधवलः सबलोऽपि त्वत्प्रभुः सुबहुभिर्मरुभूपैः ।
वेष्टितः स्वरमरीचिरिवाब्दैर्दृश्यतेऽपि न जयः क नु तस्य ॥ २४ ॥
चाहमाननृपतिस्तु दिनेऽस्मिन् कागतः कचन लभ्यत एषः ।
तं प्रविश्य कुरु राज्यममन्दानन्द ! नन्दति चिरं समयज्ञः ॥ २५ ॥
तेन वीरधवलेन विहस्यादेश एव पुररक्षणहेतोः ।
दीयते स्म तव दास्यति देशं पुंविशेषविदुरः पुनरेषः ॥ २६ ॥
संशयेन विवशीकृतचेताश्चेन्न चैनमिनमर्जयसि त्वम् ।
स्वीकृतेऽवनितलेऽत्र विधाता भूधवोऽयमधिकारिणमन्यम् ॥ २७ ॥
स्वर्णदामयमितायसमूर्त्तेर्यस्य वामचरणे विलुठन्तः ।
मण्डलाधिपतयो विरुवन्ति द्वादशापि विदितं भुवनेऽदः ॥ २८ ॥
एकतस्त्रिदशमूर्त्तिभिरर्णोराजसूनुभिरुपेत्य विलग्नैः ।
मालवक्षितिधरं बत मध्येकृत्य कृत्यविदुषाऽन्यत एव ॥ २९ ॥
श्रीभटेन बलिनैकतमेनोल्लोडिताद्यदिह विग्रहवार्द्धेः ।
कालकूटमुदगाद्यदुसैन्यं तव्यवर्त्तयदयं ननु भीमः ॥ ३० ॥
(युग्मम्)
यस्य खड्गलतया हतमाजौ हन्त वज्रमपि भङ्गमुपैति ।
तस्य शङ्खनृपतेः पुरतः कः स्थास्यतीति हृदि चिन्तय मन्त्रिन् ! ॥३१॥
तत्प्रयाहि सहसैव हि यावन्नैषि शङ्खनयनाध्वनि सङ्ख्ये ।
नश्यतोऽद्य वणिजस्तव लज्जाभाजनं भुवि भविष्यति को नु ॥३२॥
भासतेऽथ हितमप्यहितं ते तद्दृढेन भविना भवितव्यम् ।
एष शङ्खनृपतिः समुपैति स्वैरमब्धिरिव लङ्घितसीमा ॥ ३३ ॥
इत्युदीर्य पुरतः स्थितवन्तं दूतमेतमुपहूतरिपुश्रीः ।
मन्त्रिगोपतिरपीति विहस्याभाषत भ्रुकुटिभीषणभालः ॥ ३४ ॥
निर्विशङ्कमिति जल्पसि तत्त्वं दूत रे भवसि नूतन एव ।
त्वन्मुखेन य इदं च मदग्रे प्राह साहसमहो तव भर्तुः ॥ ३५ ॥
शङ्खभूपतिरयं मिलनायोत्कण्ठितो मयि यया किल रीत्या ।
तद्विधोऽहमपि तत्र तथा नौ मेलयिष्यति विधिः पुनरद्य ॥ ३६ ॥
मारवेषु जलदेष्विव भूपेषूदितेषु समुपैति यदीह ।
शङ्ख एष तदुपैतु तदुत्को व्यक्तमेष भुजगोऽस्ति ममासिः ॥ ३७ ॥
यत्प्रवेशवशतः समयज्ञैराप्यते जगति राज्यमखण्डम् ।

तं प्रवेष्टुमियमस्ति समुत्का मामका विशिखधोरणिरत्र ॥ ३८ ॥
चाहमाननृपतिस्तव देशं दास्यतीति भवता यदवाचि ।
किं विरूपमुपपन्नमिदं तद्ग्रन्थिरेष शकुनस्य निबद्धः ॥ ३९ ॥
स्वीकृतेऽवनितलेऽत्र विधाता त्वत्प्रभुर्यदधिकारिणमन्यम् ।
नाम नामकरणं तदजातस्याङ्गजस्य पुरतः कुरुतां सः ॥ ४० ॥
मण्डलाधिपतिमूर्त्तिसनाथं स्वर्णदामचरणस्य वरं तत् ।
तद्दुनोति यदयं यदुगुप्तौ पादयोर्निगडबन्धनमूहे ॥ ४१ ॥
निर्मदामकृत यादवसेनां नर्मदाविपुलरोधसि शङ्खः ।
दूत ! रे तदिति जल्पसि नैतद्बन्धनानि यदयं समवाप ॥ ४२ ॥
क्षत्रियाः समरकेलिरहस्यं जानते न वणिजो भ्रम एषः ।
अम्बडो वणिगपि प्रधने किं मल्लिकार्जुननृपं न जघान ॥ ४३ ॥
दूत ! रे वणिगहं रणहट्टे विश्रुतोऽसितुलया कलयामि ।
मौलिभाण्डपटलानि रिपूणां स्वर्गवेतनमथो वितरामि ॥ ४४ ॥
निर्विलम्बभुवनभ्रमणेन श्रान्तिविभ्रममिवाप्य यदाज्ञा ।
विभ्रमश्रियमशिश्रियदुच्चैरष्टदिक्पतिकिरीटतरीषु ॥ ४५ ॥
अद्य वीरधवलः क्षितिपेन्द्रो लज्जते स भुवि केशवमूर्त्तिः ।
आगते त्वयि यदि प्रधनान्ताद् क्लिष्कर्षणमहं वितनोमि ॥ ४६ ॥

( युग्मम् )

सिन्धुराजतनयोऽसि स एव त्वं यदि द्रुतमिहैहि महीपान् ।
गर्व एष भुजयोस्तव गेहेनर्दिनः क इव नर्दविशङ्कः ॥ ४७ ॥
एतदाशु पुरतो निजभर्त्तुर्वाचिकं मम निवेदय गत्वा ।
प्राघुणस्य तव भर्त्तुरिदानीमायुधेऽस्तु जगती रुचिताग्रा ॥ ४८ ॥

( युग्मम् )

निर्ययाविति वसन्तसभाया निर्मदः सपदि शङ्खविशिष्टः ।
आहतः सुभटदृष्टिभिरुल्काबान्धवीभिरतिकोपवशेन ॥ ४९ ॥
वस्तुपालसुभटाः पृथुलाभप्रेङ्खितभ्रुकुटिभङ्गतरङ्गाः ।
चुक्षुभुः प्रलयकाल इवाम्भोराशयो धरदलं दलयन्तः ॥ ५० ॥
केऽपि मङ्क्षु नमितोन्नमितांसाः पाणिभिः प्रहतबक्षितदोषाः ।
उत्स्मृतैर्विदलिताङ्गदरत्नैः कोपपावककणैरिव रेजुः ॥ ५१ ॥
केऽपि कोपपरतन्त्रतयाग्रे स्तम्भयष्टिमवहस्तनिपातैः ।

खण्डशो व्यधुरुदग्रबलादालानदण्डमिव मत्तकरीन्द्राः ॥ ५२ ॥
उद्धतैरपि च केऽपि शिरोजैर्लोचनैरपि च शोणमहोभिः ।
कोपपावकभवैरिव धूमैर्विस्फुलिङ्गशकलैरिव रेजुः ॥ ५३ ॥
एति वैरिकटकं स्फुटमित्याकर्ण्य केचिदपमुद्रितकोपाः ।
प्रक्षिपन्त इव नाम कराग्रोत्पीडनेन पिपिषुः कटकानि ॥ ५४ ॥
आलिलिङ्गुरसियष्टिमिहैके निश्चुचुम्बुरसिधेनुमथान्ये ।
अस्तवंश्च भुजयुग्ममपि स्वं केपि सङ्गरमधित्वरमाणाः ॥ ५५ ॥
चर्चिताः सपदि चन्दनपङ्कैः पूजितांसयुगलाः सुमनोभिः ।
वस्तुपालसचिवेन दुकूलैर्भूषिता मुमुदिरे वरवीराः ॥ ५६ ॥
देवतावसरनिर्मितिदीप्तो विप्रवेदमुदितो विदितौजाः ।
वासरादिसमये रणदीक्षामासराजतनयोऽयमुवाह ॥ ५७ ॥
पर्युदस्य करदण्डमखण्डैः षट्पदैरपि चतुष्पदिकाभिः ।
वस्तुपालसचिवस्य तदानीं बन्दिनो विजयमङ्गलमूचुः ॥ ५८ ॥
स प्रताप इव गूर्जरभर्तुर्मूर्त्तिमानथ महेन्द्रमहौजाः ।
उच्चकैरुदयशैलमिवार्कोऽध्यारुरोह तुरगं सचिवेन्द्रः ॥ ५९ ॥
वस्तुपालसुभटाः समकालं कालमूर्त्तय इवारिवधाय ।
कङ्कटान् जगृहुरुत्कटकोपाटोपजभ्रुकुटिहुङ्कृतिभीमाः ॥ ६० ॥
सङ्गराय सुभटाः प्रचलन्तः प्रेयसीजनमथो परिरभ्य ।
आमरं गुणमिव स्पृहयन्तस्तेनिरे तदधरामृतपानम् ॥ ६१ ॥
कामरागरणरागरसोद्यत्प्रीतिफुल्लवपुषोः परिरम्भे ।
कञ्चुकौ दयितयोः समकालं वापु रे त्रुटदिति त्रुटतः स्म ॥ ६२ ॥
येन भल्लकपरम्परिकाभिर्भेदलेशपदवीमुपयान्ति ।
कङ्कटाः कटरि रोमविकारैस्ते तदा विभिदिरे सुभटानाम् ॥ ६३ ॥
मामपास्य चलितोऽसि रणश्रीसङ्गतौ रणरणोत्तरलस्त्वम् ।
काचिदेवमबलाश्रुनिपातं रुन्धती पतिमुवाच युयुत्सुम् ॥ ६४ ॥
सुप्रसादमधिपस्य सुवंशं चात्मनोद्य बत मा त्रपयेथाः ।
कापि वीरदुहिताऽऽत्मपतित्वान्मन्त्रयन्तमिति शिक्षयति स्म ॥ ६५ ॥
एकतः समरतूर्यनिनादेनान्यतश्च दयितारुदितेन ।
कृष्टमानहृदयो न गृहेऽस्थान्निर्ययौ च समराय न कश्चित् ॥ ६६ ॥
प्रेयसीस्तनतटोपहितश्रीखण्डमण्डनमुरः परिपश्यन् ।
कोऽपि कङ्कटमपास्य तदन्तर्धानभीरुरधियुद्धमचालीत् ॥ ६७ ॥

काहलायमलकध्वनिदम्भादाजुहाव सुभटान् रणदेवी ।
स्वामिकृत्यमधिकृत्य समीयुस्तेऽपि तत्क्षणमुदायुधहस्ताः ॥ ६८ ॥
भानुदीधितिकलङ्कितभल्ला वर्मितोरुवपुषः शतसङ्ख्याः ।
राजपुत्रततयोऽधिगताश्च वस्तुपालसचिवं परिवव्रुः ॥ ६९ ॥
अभ्यषेणयदथ प्रथितौजा वस्तुपालसचिवो रिपुराजः ।
तर्जयन्निह पुरःस्थितिहेतोस्तर्जनीभिरिव केतुपटान्तैः ॥ ७० ॥
वाहिनी तरलकेतनवीचिः श्रीकरीकपटशैवलकूटा ।
फुल्लभल्लनलिना प्रतिकूलोत्पातिनी विरुरुचे सचिवेन्दोः ॥ ७१ ॥
स्फारितस्फुरकफेनविवर्त्तो नर्त्तितोरुनरवारितिमीन्द्रः ।
उल्लसत्तुरगतुङ्गतरङ्गः सैष सैन्यजलधिः प्रससार ॥ ७२ ॥
एत्य रोधसि महीसरितस्तं शङ्खसैन्यजलधिश्च रुरोध ।
विश्वमेतदखिलं च तदानीं प्राणसंशयमसंशयमाप ॥ ७३ ॥
दारुणो रणभरः क्षयकालस्यान्तिषद्द्विविषदोघसमक्षम् ।
वस्तुपालसचिवेश्वरलाटस्वामिनोः प्रववृतेऽथ बलानाम् ॥ ७४ ॥
पत्तिमभ्यपतदेव हि पत्तिर्वारणः करिणमश्वमथाश्वः ।
स्यन्दनो रथमिति प्रतिरूपद्वन्द्वयुद्धमजनिष्ट गरिष्ठम् ॥ ७५ ॥
वीरगर्वगदितैर्हयहेषाडम्बरैः करटिबृंहितवृन्दैः ।
स्यन्दनप्रकरचीत्कृतिजातैः काहलायमलशङ्खनिनादैः ॥ ७६ ॥
आहतस्फुरफटत्कृतिखड्गाखड्गिझङ्कृतिधनुर्ध्वनिभिश्च ।
भट्टलोकतुमुलैः शरमालासूत्कृतैर्भुवनमेतदपूरि ॥ ७७ ॥

( युग्मम् )

क्रोधवह्निरनुवेलममात्रं मन्त्रिलाटसुभटेषु दिदीपे ।
फूत्कृतिक्रमरणद्रणभेरीताम्रयन्त्रनलिकोत्थसमीरैः ॥ ७८ ॥
वाजिनिष्ठुरखुरक्षतधात्रीधूलिजालकवलीकृतमूर्त्तिः ।
क्वाप्यनश्यदिव मण्डलभेदाशङ्कया दिनकरोऽपि तदानीम् ॥ ७९ ॥
खड्गखण्डितसपत्नशिरोधिध्रंसिना युधजिरे रुधिरेण ।
छिन्नमूल इभकर्णमरुद्भिः सर्वतोऽपि खमनीयत रेणुः ॥ ८० ॥
सम्मुखागतभटासिविलूनैर्दन्तिदन्तशकलैरुदयद्भिः ।
रेणुजालकमभिद्यु बलाकामण्डिताम्बुदपदं प्रतिपेदे ॥ ८१ ॥
कोऽपि ना नभसि कन्दुकवृत्त्या कोपिना करिवरेण निरस्तः ।

देवताभिरभितः किलितोऽभूदेव ताभिरनुरागपराभिः ॥ ८२ ॥
केनचित्क्षुरिकयाशु विदीर्णो दन्तवासनिहितेन भटेन ।
विस्फुरन्करिकरः क्षितिखण्डे खण्डिताहितुलमामुदवाप ॥ ८३ ॥
स्यन्दनेन करिणोन्नमितेन स्यन्दनी तमधिरुह्य सुखेन ।
तन्निषादिनिहतश्च सुखेनैवोच्चकैरपि दिवं प्रतिपेदे ॥ ८४ ॥
हस्तिना हतहयः स्वयमुच्चैर्दत्तफालमधिरुह्य तमेव ।
तत्पतिं भुवि निपात्य च सादी कोऽप्यजायत जवेन निषादी ॥ ८५ ॥
सर्वतोऽपि मिलितैश्च रणोग्रद्वागराजिभिरभीकमनोभिः ।
कन्धरालुलितकेशकलापः कुक्कुटैरिव भटैः समयोधि ॥ ८६ ॥
कस्यचित्तदुचितव्यथितासोः स्वामिनि स्वमनृणं कलयित्वा ।
वैरिलूनशिरसा बत नृत्यन्न स्थितिं युधि बबन्ध कबन्धः ॥ ८७ ॥
वंशजेन धनुषाशु निरस्ताः कोटियुग्मकवता गुणिनापि ।
नैव सूत्कृतिमुचो न परेषां मार्गणा हृदयभेदमकार्षुः ॥ ८८ ॥
शानपत्रमरिबाणविलीनैराननैः क्षितिभृतामुदयद्भिः ।
अग्रविद्रुतसितद्युतिपृष्ठोत्पातिराहुतुलना समवापि ॥ ८९ ॥
वस्तुपालसुभटेषुभिरुच्चैरातपत्रनिवहेषु समन्तात् ।
पातितेषु रिपुराजकबन्धैः श्येनमण्डलमवाप तदाभाम् ॥ ९० ॥
शृङ्गकैरिव विहस्य गृहीतैरिक्तबाणधिभिरेव पिशाचैः ।
रौधिरेषु विदधुर्जलकेलिं निम्नभूतलगतेषु नदेषु ॥ ९१ ॥
रेजिरेऽश्रनटिनीषु तरन्तो वर्मिनाम्भमगणोननिषण्णाः ।
कोटिपात्रकलकुम्भकराः सांयात्रिका इव भटाः सचिवेन्दोः ॥ ९२ ॥
क्षेत्रसीम्नि सचिवेश्वरगृह्यैः शङ्खसैन्यमभितोथ विलूय ।
पातितोऽरिभटशीर्षसमूहः क्षोदितश्च कणशोऽश्वखुराग्रैः ॥ ९३ ॥
कोपतो युधि दशन्नधरोष्ठं शङ्खभूपतिरथ स्वयमेव ।
सोदरैः परिवृतः समसत्त्वैः वस्तुपालविजयाय चचाल ॥ ९४ ॥
वस्तुपालसचिवस्य तदानीं वीरमप्रभृतयो नव वीराः ।
शङ्खबन्धुभिरमर्त्यपुरान्तस्तेनिरेऽधिगणना वसुनोऽपि ॥ ९५ ॥
अथ शङ्खवधे कृतप्रतिज्ञो गुलगोत्रप्रभवो भटाधिनाथः ।
सचिवं प्रणिपत्य भूणपालः प्रचचाल प्रधनाय बाहुशाली ॥ ९६ ॥
गिरिगुरुतुरगोत्तमाधिरूढः करतलनिस्तलनर्तितोरुकुन्तः ।

रिपुनृपसुभटैः स कान्दिशीकैर्विवलितकन्धरमीक्षितः कथञ्चित् ॥ ९७ ॥
कटकटसुभटः सपत्नकालः समिति विसर्पति सैष भूणपालः ।
इति मुखरमुखा मखाशनास्तं नभसि गताः समदर्शयन् सुरीणाम् ॥९८॥
देवे सत्यपि जागरूकमहसि श्रीवस्तुपाले धुरी-
मेतां भङ्गमहं पुरत्र सहसा यः साहसादागमत् ।
भो भोः शङ्खनृपः क स क स इति व्याहारधीरः पुर
स्तम्भं सैष जघान शङ्खनृपतिः सोऽस्मीति यो योऽवदत् ॥ ९९ ॥
प्रहसितवदनः पुनर्बभाषे गुलकुलभूषणमेष भूणपालः ।
कथयत किमु सिन्धुराजपत्नी प्रसभमसङ्ख्यतमानसूत शङ्खान् ॥ १०० ॥
अपलपसि हहा मुधैव शङ्ख! स्वमधिकवल्लभजीवित त्वमेवम् ।
कुशजलतरला हि जीवितव्यास्तव यश एव नृदेव! सम्मतं नः ॥ १०१ ॥
अयमयमहमस्मि सत्यशङ्खो द्रुतपदमेहि यदि स्मयस्तवास्ति ।
इति भणितिपरस्य लाटभर्तुर्व्यधित किलाधिमुखं गुलः स्वकुम्भम्॥१०२॥
आयान्तं भुवनसमक्षमेतमुच्चैराकृष्टं मुखविवरेण जीवितव्यम् ।
खड्गेनाच्छिददथ भूणपालकुन्तं शङ्खोऽयं क्षुरमिव जीवितेश्वरस्य ॥१०३॥
एकोऽपि शङ्खनिशितासिलताप्रहाराज्जातो द्विधा समरसीमनि भूणपालः।
पञ्चत्वमाप्य महसा जगतां समक्षं भेजे ततस्त्रिदशतामिति कौतुकेन॥१०४॥
तदिति भुवनपालोदन्तमाकर्ण्य कर्ण-
ज्वरभरकरमन्तःकोपसाटोपवक्त्रः ।
सविषयमपि शङ्खं स्वर्गतां नेतुमुर्वी-
तलधवलनहेतोर्वस्तुपालश्चचाल ॥ १०५ ॥
दृष्ट्वात्मानं ध्वस्तसेनं समन्तादायान्तं च स्फारसेनं वसन्तम् ।
अङ्गी पश्यत्यङ्ग! भद्राणि जीवन्नेवं ध्यायन्नश्यति स्माशु शङ्खः ॥१०६॥
स्थैर्येणाजनि सिन्धुराजतनुभूर्युद्धेषु विन्ध्याचलो
दोर्दण्डेऽस्य विशालवंशविभवे रेवाऽसिरेवाऽभवत् ।
उत्तालप्रतिकूलपादपचमूनिर्मूलनोच्छृङ्खलं
जातं निर्मितसादयादवदवच्छेकच्छिदे यत्पयः ॥ १०७ ॥
ध्वस्तव्यस्तसमस्तपत्तिविभवो वाहत्वराविच्छुट-
त्केशः क्लेशविसंस्थुलेन मनसा प्रम्लानवक्त्राम्बुजः ।

शङ्खः सोऽपि सहासतालममरैरालोक्यमानः क्षणा—
दुत्तालः किल वस्तुपालसचिवान्त्रासं समासेदिवान् ॥ १०८ ॥
(युग्मम्)

श्रीवस्तुपालसचिवादचिरात्प्रणष्टः शङ्खस्तथा पथि विशृङ्खलवाहवेगः ।
तत्पृष्ठपातभयभङ्गुरचित्तवृत्तिः श्वासं यथा भृगुपुरे गत एव भेजे ॥१०९॥

अथ सचिवशचीशः स्वर्गिभिः स्तूयमानो
दिवि भुवि च मनुष्यैः शोधिताजिप्रदेशः ।
मुदितपुरपुरन्ध्रीनेत्रनिष्पीयमानः
कृतजयपरिरम्भः स्तम्भतीर्थं विवेश ॥ ११० ॥

बद्धा तोरणधोरणी प्रतिगृहं प्रत्यट्टमुट्टङ्किता
केतुश्रीः प्रतिवीथि कुङ्कुमरसैः सिक्ता भृशं भूमयः ।
एतस्मिन्नगरे सरोरुहदृशां वक्त्रेषु गीतध्वनिः
प्रारोहद्विजयार्जितां कलयति श्रीवस्तुपाले श्रियम् ॥ १११ ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये शङ्खयुद्धवर्णनं नाम पञ्चमः सर्गः

कृष्णं स्वस्मिन् सतृष्णं मम दयितमपि स्वैरिणी कीर्त्तिरेषा
चक्रे तत्किं विरूपं प्रतिकरणविधौ बालिशाऽहं किमस्मि ।
ध्यात्वेवान्तस्तदेतत्त्वयि समुपगतं कीर्त्तिकान्तश्रियाऽसौ
वर्णं द्वेष्टीति यद्वा पुनरिह भवतः स्वैर्गुणैर्जैत्रसिंह! ॥

---

## षष्ठः सर्गः ।

षडपि शङ्खविशृङ्खलदोर्बलप्रलयकालममात्यमुपासितुम् ।
तमृतवोऽथ समाययुरुज्ज्वलस्मितरुचं तरुचक्रसुमव्रजैः ॥ १ ॥
भ्रमरगुञ्जितपुञ्जितपाटलाकुसुमदुन्दुभिजृम्भितमङ्गलः ।
ऋतुरभूत्पुरतः पटुरुष्णताभरचयं रचयंस्तरणित्विषाम् ॥ २ ॥
वपुषि कान्तनखच्छुरितक्रमभ्रमकरं मकरन्दकणान् किरन् ।
सुखयति स्म विकम्पितचम्पकोऽङ्घ्रिपवनः पवनः प्रमदाजनम् ॥ ३ ॥
मधुपराजिभिरेत्य समन्ततो मधुपराभिरवाकृतकर्णिकः ।
विचिकिलो मकरन्दजलैर्दधाविचिकिलोपचितां वनमेदिनीम् ॥ ४ ॥
मलयजं सितमंशुकमिन्दुरुक्कदलिकागृहमम्भसि खेलनम् ।

विषयिणामिह पाटलिमल्लिकासुमनसो मनसो मुदमादधुः ॥ ५ ॥
सुरभयन्मरुदङ्घ्रिपमूलभूवलयपुष्टिकृते वनपालवत् ।
नवपरागभरं नवमालिकासुमनसा मनसामिव पञ्जरान् ॥ ६ ॥
सुमुदिते मुदितेनकरैरपामसहनैः सह नैर्ऋतमारुते ।
खरवधूरवधूमितचित्तभूरसमया समया प्रियमापतत् ॥ ७ ॥
मलयजद्रवतीमितमञ्जसा प्रियतमोरसि काचन कामिनी ।
स्वकुचमण्डलमैन्दवमण्डलोज्ज्वलमहोऽशिशिरं शिशिरं दधे ॥ ८ ॥
प्रियजनव्यजनानिलवीचयः शिशिरकुम्भपयोऽपि च गोस्तनी ।
परिणताम्रफलानि सितेक्षवोऽप्यसुमतां सुमतां पदवीमगुः ॥ ९ ॥
उपवनाश्रमवासपरः प्रियाकुचकमण्डलुधारिकरः कृती ।
मलयजार्जुनितो विषयी जनः किमु वताप सतापसतामिह ॥ १० ॥
जलदकालनृपद्विरदा रदायितबकीततयोऽथ नभोङ्गणे ।
सगलगर्जितमेत्य घनाघनाः पदमदुर्दिनदुर्दिनहेतवः ॥ ११ ॥
त्रिदशचापमुदस्य तडिद्गुणं रतिपतेरिव चापभृतो भटाः ।
ववृषुरम्बुमुचः पथिकावलेः शिरसि तारसिताः शरधोरणीः ॥ १२ ॥
अनुवनं वपकन्दलकैतवाद्विशदलिङ्गतयाऽऽविरभूत्स्वयम् ।
घनपतत्तरवारिहता खगावलिरहोऽलिरहो धनुषा रुषा ॥ १३ ॥
विरहिणीहृदयस्य विभेदिनः पिशितखण्डसमूह इवारुणः ।
दिशि दिशि क्षितिपीठमधिस्फुरंस्त्रिदशगोपगणोऽपगणो बभौ ॥ १४ ॥
वपुरपास्य वियुक्तदशासवः स्वदयितानिव वीक्षितुमभ्रमन् ।
प्रतिदिगन्तमुषर्बुधकीटका अधिमहत्तमसंतमसं निशि ॥ १५ ॥
सपदि याः पदि यातमपि क्षयादसुहितं सुहितं न शिवा व्यधुः ।
स्वयमिता यमिता नभसा घनैरहसिता हसिता इव गर्जिभिः ॥ १६ ॥
प्रहतमर्दलमण्डलधोङ्कृतिध्वनितबन्धुरगर्जिभिरम्बुदाः ।
शिखिकुलं कृतकेकमनेकशः पृथुमुदारमुदारमनीनृतन् ॥ १७ ॥
लिखितवर्णमयं भुवनत्रयीविजयपत्रमिव स्मरवादिनः ।
निजतरुस्थमराजत केतकं सिततमं ततमञ्जुमधुव्रतम् ॥ १८ ॥
अभिनवस्फुटितस्फुटमालतीमधुरगन्धिनि वाति नभस्वति ।
प्रतिदिशं विवशा मधुपावली द्रुतमहीनतमभ्रममभ्रमत् ॥ १९ ॥
समददर्दुरकूजितपूजिता हरितरोमविकारनिरन्तरा ।

जलदकान्तगृहीतगिरिस्तनी भृतरसा तरसा रुरुचे रसा ॥ २० ॥
कुटजयूथकयोः स्मितपुष्पयोरुभयतोऽपि गमागमसम्भ्रमी ।
परिमलातिशयं भ्रमरव्रजो न हि विवेकुमलं तु मलं दधत् ॥ २१ ॥
स्मरनृपस्य सितातपवारणभ्रममियेष शिलिन्ध्रपरम्परा ।
अपि च सैन्यरजोऽनुकृतिं दधुः स्मितकदम्बकदम्बकरेणवः ॥ २२ ॥
अथ जरेव पयोबलघातिनी जलमुचां पलितंकरिणी शरत् ।
प्रतनुतौपयिकं सरितामथो जगति सङ्गतिसम्मदमासदत् ॥ २३ ॥
प्रियतमा यतमानपरिग्रहप्रगुणितागुणितात्मरतागमाः ।
रसविधेः सविधे कमितुर्गता मुमुदिरे मुदिरे दिवि दीव्यति ॥ २४ ॥
मदकलोक्षकलोऽक्षतपद्मिनीशुचितटाकतटाकसितच्छदः ।
कमलशालितशालितलावतिः स समयोऽजनि यो जनितोद्यमः ॥ २५ ॥
दिगबलापटलीं सममर्यमा स्मितमुखीं पृथुपाण्डुपयोधराम् ।
अविरलांशुकभाजमशिश्रियद्विकलहं कलहंसकनादिनीम् ॥ २६ ॥
सकलमेकलमेदुरगोकुले रसमये समयेऽत्र महीभुजः ।
सुबलिनो बलिनोपमहीभुजामिव जयाय जयायजनं व्यधुः ॥ २७ ॥
शरदृतौ भुवनान्तरुपेयुषि प्रकृतधोरणिबन्धमुदश्विनः ।
प्रतिदिगुत्सृतवन्दनमालिकाभ्रममुदारमुदारचयन् शुकाः ॥ २८ ॥
गजतुरङ्गमशस्त्रभटार्चनव्यतिकरेण महानवमीतिथौ ।
अपि च दीपदिने नवसम्पदावनिभृतो निभृतोत्सवमादधुः ॥ २९ ॥
सततमिक्षुतलस्थितगोपिका ललितलोलितगीतकलैर्बहिः ।
मृगकुलान्निजुगोप जिघत्सतः कलमगुल्मवनीमवनीतले ॥ ३० ॥
वपुरि हंसरवानतिपेशलान्स्वरवतोपि निशम्य शिखण्डिनः ।
स्मयमिवाङ्गिनमायतमत्यजन्निजतनूरुतनूरुहकैतवात् ॥ ३१ ॥
अयुगपत्रतरूनपरद्विपानिव मदोपमपुष्पसुगन्धिनः ।
इह चुलुक्यनृपद्विपमण्डलीक्षरदुदारमदारमदारयत् ॥ ३२ ॥
घनहुताशनताडितवारिदावलिपुटस्थपुटाम्बरमूषिका ।
रजतपिण्डमिवेन्दुमजीजनद् भुवमहीनमहीनयशोरसा ॥ ३३ ॥
पतितमेघदलस्य समन्ततः पवनमार्गमधूकतरोरिह ।
असमये कुसुमैरलुभिस्त्विषा सहसि राजनि राजनितश्चलः ॥ ३४ ॥
तुहिनमारुतसैनिकसादिताखिलदिगन्तवियोगिजनं ततः ।

जगति राज्यमजायत हैमनं शुचिरसं चिरसङ्गतदम्पति ॥ ३५ ॥
दिनपतेरपि कान्तिमनूष्मयन् दिनसमूहमहो समकोचयत् ।
विषयिणोऽमदयच्च मनस्विनीजनमयं नमयंस्तुहिनानिलः ॥ ३६ ॥
गजपटैर्घुसृणाङ्गविलेपनैः सनुपगूढवधूकुचमण्डलैः ।
विषयिभिर्विजितो जडिमेत्यहो स्वमहसा स्म हसन्ति हसन्तिकाम् ॥३७॥
विषयिणामिव पुण्यललावधूविविधभोगमयं ददती फलम् ।
गुरुतराक्रमतोऽत्र हिमानिकाभरजनी रजनी समजायत ॥ ३८ ॥
पदपतत्प्रियचाटुपदैरपि स्खलितजक्रुधि येन भृशायितम् ।
व्यनमयत्तमहो किमु यामिनी घनहिमा नहि मानवतीजनम् ॥ ३९ ॥
दिशमपास्य यदस्य विशिष्यतो दिशि विवेश परेतपते रविः ।
तुहिनमेतदहो बत मन्महे वयमतो यमतोऽपि भयङ्करम् ॥ ४० ॥
तृणकुटीसुषिरागतहैमनानिलधुताः सचिवेश्वरवैरिणः ।
निशि करावरणा रदवल्लकीकणकणाणकणावसरं व्यधुः ॥ ४१ ॥
हिमभयादहिमत्विषि जीविनार्थनधिया यमधामनि धावति ।
स्तनगिरीन्द्रगतं सुदृशामभूदवटगं वटगं च महोऽस्य नु ॥ ४२ ॥
मधुरझङ्कृतयः पलिनीलतामधु निपीय कवित्वपरा इव ।
सहसि कुन्दवनीषु विरेजिरे कुसुमितासु मितासु मधुव्रताः ॥ ४३ ॥
हिमवतोऽस्य ऋतोः सुरभेरपि प्रववृतेऽथ ऋतुः शिशिरोत्तरा ।
उडुपयोः श्रवणोत्तरसञ्ज्ञयोरुभयोरुभयोरभिजिद्यथा ॥ ४४ ॥
प्रतिदिशं लवलीलवलीधुताक्रुतमालतमालतरूत्तरः ।
अभिससार ससारसकूजितो धृतलवङ्गलवङ्गलताध्वजः ॥ ४५ ॥
विकचकुन्दवनैरधिकाधिकं सुरवकैरवकैरवगन्धिभिः ।
विरुरुचे शिशिरः सशरस्मरप्रतिभयातिभयान्वितदम्पतिः ॥ ४६ ॥
ऋतुमशोभयदेतमहर्निशं भ्रमरगायनगीतगुणोदया ।
प्रविकसन्मुचुकुन्दभवा जने रसकले सकलेऽपि सुगन्धिता ॥ ४७ ॥
सुरभिजातिषु पुण्यमयं वयं मनसि बालकमेव विद्महे ।
तपसि पश्य भवन्ति यदङ्घ्रयः शिरसि मानवमानवतामपि ॥ ४८ ॥
घुसृणमर्दनतो मसृणस्तना विहितगर्भगृहस्थितयो निशि ।
मृगदृशः सुरतोत्सवडम्बरे सनिकषा निकषा प्रियमस्वपन् ॥ ४९ ॥
कुतुकिनः किल फाल्गुनपूर्णिमातिथिमहेशमहेशगणा इव ।

इह मुखेन कवित्वममर्त्यराडिभसितं भसितं विकिरुः करैः ॥ ५० ॥
स्फुरति फाल्गुन एष रजोमहः स्फुटमितीव मरुद्भिरुदश्रितः ।
दिगबलावदनानि वितस्तिरे नवतरो बत रोध्ररजोभरः ॥ ५१ ॥
नरमणी रमणीयतमामथो पृथुयशाःसुरभिः सुरभिश्रियम् ।
क्रमतया मतया समुपस्थितां भृशमलोकत लोकतमोपहः ॥ ५२ ॥
अनुवनं दधुराम्रमहीरुहः कुसुमसायकधन्विनिषङ्गताम् ।
भ्रमरपक्षतिमञ्जुलमञ्जरीलटभरोपभरोपचितश्रियः ॥ ५३ ॥
यमवतामवतामपिमानसं स्वकमलं कमलं प्रशमश्रियः ।
व्यकलयत्कलयन् धनुरैक्षवं पिकवचःकवच. कुसुमायुधः ॥ ५४ ॥
विरहिणीहृदयानि यदात्मनो न्यदलद्दलयन्त्रशरैः स्वरैः ।
तदमुना धिगहो कलकण्ठकाकुलमसीममसीमहिमाऽभवत् ॥ ५५ ॥
कमलिनीनमकाममसूत्रयन् कमलिनीकलगुञ्जितपुञ्जितः ।
दमनकोऽपि च सौरभसम्भ्रमी दमनको वशिनां समजायत ॥ ५६ ॥
स्फुटदशोकपरम्परिकात्मिका भ्रमरधोरणिधूमवती चिता ।
पथिकवृन्दमदीदहदग्निभाभरचिता रचिता स्मरबन्धुना ॥ ५७ ॥
सुरभिणा नवचूतफलच्छिदागसि धृता बत किंशुकचञ्चवः ।
वनभुवोभ्रममित्रभिदो दधुस्तनुमतामिह किं शुकचञ्चवः ॥ ५८ ॥
प्रियजनैरुपदीकृतमात्मनः स्थुलकुचा लकुचास्यमहीरुहाम् ।
कुसुममण्डनमुद्दधुरुज्झितासमतनूतननूतनभूषणाः ॥ ५९ ॥
विदधिरे नवभूतवनं स्तुतिध्वनिभृतं निभृतं कलकण्ठिकाः ।
मधुलिहोऽपि च झङ्कृतिनिर्मितस्तवकुलं वकुलं परिरेभिरे ॥ ६० ॥
तिलकचम्पकतः स्मितमाधवीकुरवकं रवकन्दलितस्मरा ।
मधुलिहां ततिरेत्य मधूदकैरपिहितं पिहितं परितो व्यधुः ॥ ६१ ॥
वसुदृशां सुदृशां सुरतस्विदामलकजालकजामनवस्थिताम् ।
व्यतनुतातनुतापकुलं गिलद्द्रुमलयो मलयोऽनिलवीजनैः ॥ ६२ ॥
मलयजालयजालनभस्वति स्फुरतिका रतिकार्मणिताननना ।
नवतरं बत रङ्गमुपादधे प्रियजने यजनेन तनोः स्वयम् ॥ ६३ ॥
सहयताहयतारकुहुत्कृतिक्रमलतामलतारतेऽखलाः ।
मलयमूलयमूरुहकाननाञ्जनिभृतानिभृताः ककुभोऽभितः ॥ ६४ ॥
समलया मलयाचलवायवो भुवि रताविरताभिमता भृशम् ।

रतिवरेऽतिवरेण्यपुरस्सरे प्रतिदिशन्ति दिशं प्रशमाम्बुधेः ॥ ६५॥
मनस्विनीभिर्जगिरे प्रियाणामुपासितानामपि कोपिताभिः ।
वाचः शुचौघाः स्वगिरां विलासमुपासितानामपि कोऽपि ताभिः ॥ ६६ ॥
असमरसमये नभस्यकाले स्मरललितानि जिगीषवोऽभिलेषुः ।
असमरसमये नभस्यकाले समघटि सन्तमसं घनोदयेन ॥ ६७ ॥
विरहिणीव्यथकं शरदागमे कमलिनी वरलाभरसं हितम् ।
नहि दधावधिगम्य जलाशयं कमलिनीवरलाभरसंहितम् ॥ ६८ ॥
यो व्यधद्भुवि नतीर्युवतीनां कामराजिविततां नहि मानी ।
तासु लीनमपि तं हिमकाले कामराजि विततान हिमानी ॥ ६९ ॥
विटपिनां शिशिरे परितो वनं विदलितं विरहोपहितात्मनाम् ।
प्रतिदिशं हृदयं च मृगीदृशां विदलितं विरहोपहितात्मनाम् ॥ ७० ॥
निरवधिमधुना रसालसालं प्रसवभरेण सिषेविरे द्विरेफाः ।
निरवधिमधुना रसालसाऽलं विरहिवधूः पिकपञ्चमास्त्रपातैः ॥ ७१ ॥

एतानृतून्षडपि सोत्सवमात्मसेवा-
हेवाकपाकनिभृतानभितो निरीक्ष्य ।
चौलुक्यचन्द्रसचिवोऽथ मुदं रिरंसा-
दत्तस्मरच्छविभरं बिभराम्बभूव ॥ ७२ ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये ऋतुवर्णनं नाम षष्ठः सर्गः ।

पातालं गर्त्तपूरस्तदनु खरशिलाभूरभूत् कुम्भिपीठं
दिक्कुम्भिव्याजमाशा निजनिजपतिभिर्भूषिताः शालभञ्ज्यः ।
जैत्र ! त्वत्कीर्त्तिदेव्याः सुरसदसि जगत्युच्चैर्द्यौः शलाका
कुम्भः किञ्च ध्रुवोऽयं ध्वजितसुरसरिद्दण्डति स्वर्गदण्डः ॥

---

## सप्तमः सर्गः

वनान्तलक्ष्मीमयमार्त्तवीमगात्क्रमाद्मात्यैलविले विलोकितुम् ।
विलोकनं नाम विलोक्य वस्तुनो विलोचनानां फलमामनन्ति यत् ॥१॥
नदलिभूपाजयडिण्डिमैः स्मरं प्रबोधयन्त्यो युवचित्तशायिनम् ।
समीरवीचीचलचीरपल्लवास्तदाऽचलन् वर्त्मनि चारुलोचनाः ॥ २ ॥

विलोलदोःकन्दलरत्नकङ्कणकणो वधूनामधिकं व्यराजत ।
धनुष्कटङ्कार इवैकधन्विनः स्मरस्य लक्ष्यीकृतकामिचेतसः ॥ ३ ॥
सरोषहुङ्कारपदैरिव क्रमा नितम्बिनीनां मणिनूपुरकणैः ।
पुरप्रयातो दयितान् वितेनिरे वलन्मुखान्मन्थरगामिनोऽपि च ॥ ४ ॥
तदाऽचलद्दुर्गभुवां नतभ्रुवां नितम्बपथ्यामधिरुह्य मन्मथः ।
मनःस्थितः कुण्डलमारवर्त्मना विध्वाध धुन्वन्कबरीमयं धनुः ॥ ५ ॥
सखीरपास्यानुपदं समागता विपक्षनाम्ना दयितेन जल्पिता ।
अवस्थिता तेषु पदेष्ववाङ्मुखी निरश्वसीत्कापि सबाष्पमङ्गना ॥ ६ ॥
समागता पृष्ठतयैव कामिनो विलम्ब्य कण्ठे मृदुबाहुयैकया ।
तदाहितोत्कण्टकपाणिपाणिजप्रसक्तवामस्तनिकाऽपरा ययौ ॥ ७ ॥
विकूणयन्ती वदनं पदे पदे नखव्रणार्त्या जघनस्य काचन ।
विबाधते ते किमिति प्रहासिनं जघान लीलाकमलेन कामिनम् ॥ ८ ॥
कयाचिदन्वागतयाशु हासतो निरुद्धदृक्कोऽपि कराङ्गुलीदलैः ।
तदन्यसञ्ज्ञागसि कातरोऽन्तरा विचिन्त्य मूकत्वमुदर्कमाददे ॥ ९ ॥
निजोत्तरीयाञ्चलरुद्धलोचनः कयापि तत्कण्ठविलम्बया पथि ।
नितम्बबिम्बाधिकभारया प्रियो न तैलयन्त्रीवृषतां न लम्भितः ॥ १० ॥
परस्परांसप्रहितैकदोर्लतौ प्रियापती वर्त्मनि कौचिदीयतुम् ।
वसन्तलक्ष्मीमवलोकितुं दिवो भुवं प्रयातौ रतिमन्मथाविव ॥ ११ ॥
करम्बितान्योन्यकरं प्रियापती विलोलदोर्दण्डनखांशुमध्यगौ ।
विरेजतुर्वर्त्मनि पुष्पधन्वना ततज्यबाणासनपाशिताविव ॥ १२ ॥
अनुप्रयातेन वरेण कौतुकात्प्रिया स्मरेणेव धनुर्लतायता ।
उदासि मध्ये परिमृश्य वेणिकासुरोमराजीगणयुग्मराजिता ॥ १३ ॥
उपागतः कोऽपि युवात्मयोषितं तद्बाहुमूलाहितहस्तपङ्कजः ।
स्तनोपपीडं परिगृह्य मन्मथप्रहारभिन्नामिव धारयन्ययौ ॥ १४ ॥
तवान्तिकं साम्प्रतमानयामि तामिति प्रतिज्ञां कृतपूर्विणी पथि ।
सखि स्पृशेर्मामिति धाविता मनस्विनीमहो कापि निनाय कामुकम्॥१५॥
निपीडितैका स्तनहेमकुम्भयोर्मणीलता केयमिति प्रजल्पता ।
अन्या नु किं ते नु दृशीति चुम्बिता मिथोऽतिसन्धानपरेण कामिना॥१६॥
अथो पथीत्थं मिथुनानि मन्मथप्रथां वितन्वन्ति वनं प्रपेदिरे ।
उदारझङ्कारमुखैः शिलीमुखैः सुखैकवेश्मेदमितीव संस्तुतम् ॥ १७ ॥

विलासिनो वीक्ष्य सुधाशनोपमानिमानहो रन्तुमुपागतानघः ।
दिगन्तकुक्षिम्भरिभूरिभूषणद्युतो युयोषित्प्रतिमाश्च योषितः ॥ १८ ॥
सुसम्पदा नः फलपुष्परूपया परोपकाराय भविष्यते कदा ।
इति ब्रुवन्तः किल कोकिलारवैः प्रवालहस्तैर्ननृतुर्वनद्रुमाः ॥ १९ ॥
विराविभृङ्गावलिकङ्कणा भुजाभिरामशाखाः स्तबकस्तनानताः ।
कुसुम्भरक्तांशुकपल्लवास्ततः स्त्रियो व्यलोकन्त पुरः सखीरिव ॥ २० ॥
सुलोचनानां सुशिरोरुहां करैः प्रवालमाभज्यत यत्पुरःस्थितम् ।
अतः स्वनेत्राम्बुजकल्पभीरुभिर्मृगीमयूरैरपयातमन्यतः ॥ २१ ॥
सुमायुधः कृन्तति धैर्यमायुधैरेतैरितीव प्रविमृश्य काचन ।
प्रसाद्यमाना दयितेन नावदत्पराङ्मुखी किन्तु लुलाव कौसुमम् ॥ २२ ॥
सुजातवक्षोजफलां प्रसूनरुग्दृशं प्रवालारुणपाणिमग्रतः ।
कपिः स्पृशन्मानवतीं लताभ्रमादसूत्रयत्कामितमेतदीशितुः ॥ २३ ॥
लताशिखापुष्पजिघृक्षयापरा व्युदस्य पार्णि श्लथनीविबन्धना ।
सरोजनाभीभुजमूलमुग्धकैः प्रकाशयन्ती प्रियचित्तमाक्षिपत् ॥ २४ ॥
उदस्तपाणे कुसुमाय कामिना श्रिते सुदुर्गे हृदि मुग्धयोषितः ।
तदुद्रुमाकम्पितयास्य मूर्द्धनि प्रसूनवृष्टिर्लतया व्यतन्यत ॥ २५ ॥
अमूनि पुष्पाणि किलाहमाप्नुवे नहीति पाणी समुदस्य वादिनी ।
भुजग्रहागाधकटिः प्रिया रयादुदासि केनापि च मध्यमुष्टिना ॥ २६ ॥
लताग्रपुष्पावचिचीषया शिखावलम्बिनी कापि दिधीषया किल ।
तथोपगूढा दयितेन निर्दयं यथा सपत्नीहृदयं व्यदूयत ॥ २७ ॥
अमी निकुञ्जभ्रमरा दशन्ति मा त्वरध्वमित्थं कृतकं विराविणी ।
करौ धुनाना मणिकङ्कणक्वणादुपांशु काचित्प्रियमाह्वयज्जनात् ॥ २८ ॥
दृशि स्थितं पुष्परजो व्यपोहितुं समर्पितं वक्त्रमभूल्लताधिकम् ।
प्रियोऽपरस्याः कृतकक्रुधाऽनयाप्यसौ निजघ्ने जघनेन सम्मदी ॥ २९ ॥
फलानि लूनेऽत्र कियन्ति गण्यतामितीरिता यावदियं तथाऽकरोत् ।
प्रियेण कस्याश्चन मायिनाऽपराऽभिषष्वजे तावदचुम्बि च क्षणात् ॥३०॥
विपक्षनामग्रहपूर्वमर्पयन्...........य कोपनया कयाचन ।
इहास्ति सा ते रुचितेति वक्षसि स्तनेन निस्ताड्य तथैव संयतः ॥ ३१ ॥
किमेकमाविःक्रियते न पल्लवैर्ममास्ति रे पल्लव कोपि दुःखदः ।
किमेतया क्षारकमालयाऽग्रतस्त्वयास्ति मे क्षारभरो यदाहितः ॥ ३२॥

अमूभिरुद्वेगकलुम्बिभिश्च किं पुरा त्वयोद्वेगपदं कृतास्मि यत् ।
अशोकयाशोकमिदं तथैव ते प्रणेयमिष्टः सदृशां हि सङ्गमः ॥ ३३ ॥
*इति ब्रुवाणा स्मितजातिकप्रया गिरा च लीलायितजातिकप्रया ।*
*पदं दधत्या हृदि वक्रताभुवा भ्रुवा च कान्तं निजघान काचन ॥ ३४ ॥*
( कलापकम् )

यथायथं ताः प्रियपाणिगुम्फितैर्वनप्रसूनैर्वनजायतेक्षणाः ।
क्षणादमोच्यन्त सुवर्णमण्डनं प्रियाकरं हि प्रियवस्तु जायते ॥ ३५ ॥
महीरुहाणां श्रुतिपाशपेशला जनेन दोला विहितास्ततो हिताः ।
मृगीदृशो यास्वधिरुह्य सुप्रभासुवर्णताडङ्कतुलां प्रपेदिरे ॥ ३६ ॥
प्रतापमुच्छेत्तुमिवोष्णदीधितेर्विलोलिदोलेन्दुमुखीमुखच्छलात् ।
विक्लृसगोपा गहनेषु वीरुधां हिमांशुधाटी गगनं व्यगाहत ॥ ३७ ॥
प्रियप्रसादादिव कापि कामिनी प्रणुन्नदोलागगनाग्रमासदत् ।
तथा विपक्षो स कटाक्षरश्मिभिर्मुहुः कृताकृष्टिरिवापपात च ॥ ३८ ॥
नभोऽधिरुह्याशु विलोलदोलया यदा यदा भूमिमियाय वाणिनी ।
विकीर्णपुष्पच्छलतस्तदा तदान्वियाय तत्क्षुब्धमिवेन्दुमण्डलम् ॥ ३९ ॥
नितम्बभाराबरणौ सनूपुरारवैर्नितम्बः स्तनभारतोऽपि च ।
चक्रन्द काञ्चीनिनदेन योषितोऽधिदोलमुन्नम्रविनम्रवर्ष्मणः ॥ ४० ॥
द्रुताहता व्योमचरैर्यदाम्बरेऽन्तरे यदा हन्त गतागता भुवि ।
भियेति कस्याश्चन वल्लभस्तदाऽश्वसद्यदासौ विरराम दोलनात् ॥ ४१ ॥
प्रसूनदोलादि विहाय खेलनं स्त्रियः प्रचेलुर्जलकेलये ततः ।
वभुक्तवस्तूपरि मन्दितादरो नवं नवं वस्तु जनोऽभिकाङ्क्षति ॥ ४२ ॥
वधूजनेऽस्मिन्जलकेलिहेतवे प्रयाति पुष्पाणि विलुण्ठ्य वीरुधाम् ।
तदन्वधावन्नलयो विराविणः स्ववस्तु को नश्यदुपेक्षते पुरः ॥ ४३ ॥
भुजैर्हि रे याहि रयाय तं नखप्रभाधनुःपुष्पमयैः सहेषुभिः ।
दधानमात्मप्रियमेकका वधूः सुमायुधं मूर्त्तमिव व्यलोकयत् ॥ ४४ ॥
व्रजन्प्रियायाः पथि कश्चिदातनोद्भुजावलम्बं पटुचाटुचञ्चुरः ।
परश्च दोर्दण्डमुदस्य तेनिवान्पटेन कान्तोपरि तापवारणम् ॥ ४५ ॥
नितम्बवक्षोरुहभारनिःसहां निजप्रतिच्छायगलां पथि प्रियाम् ।
प्रियो न यां निर्भरमंसलम्बिनीममोदयत्केलिदलानिलोर्मिभिः ॥ ४६ ॥
पथि प्रयान्त्या मृगशावचक्षुषः सुखक्रमन्यासकृते प्रतिक्रमम् ।

वरः पुरोगस्तृणकाष्ठकर्करादिकं स्वपादाहतिभिस्तिरोदधे ॥ ४७ ॥
मृदुः प्रयातध्वनिपेशलध्वनिः स्ववल्लभाखेदविनोदहेतवे ।
अवाग्भवत्कोकिलवल्लभाननमनुप्रविष्टः सुभगः स्म गायति ॥ ४८ ॥
सरोजवक्त्रां शितिशैवलालिकां सहंसकां कूलदुकूलभासिताम् ।
सखीमिव प्रेक्ष्य पुरः सवूर्मिकां नदीमदीनोऽजनि भामिनीजनः ॥ ४९ ॥
तटासनानामथ मन्त्रिभूपतेर्नितम्बिनीनां स्फुटफेनहासया ।
विलोलहस्तैः सरिता विकूजितैः प्रभाषयन्त्येव पदा दधाविरे ॥ ५० ॥
तटस्थितानां सुदृशां पयोधरे पुरःप्रतिच्छन्दमुदीक्ष्य कामिनः ।
प्रसार्य पाणी परिरिप्सवेऽत्र तत् किलाशु झम्पामभितो वितेनिरे ॥५१॥
करान् धुनाना नन मा न मा नन मेत्युदीरयन्त्यः पृथुवेपथूदयाः ।
पुरः प्रविष्टैर्दयितैः पयोऽन्तराऽक्रियन्त मङ्क्षु स्वहृदीव योषितः ॥ ५२ ॥
विमुक्तसीमाश्रयमाशयं वहंस्तदङ्गरागाहितरागविभ्रमः ।
नितम्बिनीनां नवसङ्गमे नदस्तदा चकम्पे चलमीनलोचनः ॥ ५३ ॥
नितम्बिनीभिः करकैरवाहतं नदन्नवाम्भोतिघनानकध्वनि ।
तटद्रुमालीतलरङ्गमण्डपेष्वनीनृतन्मेघसखं भ्रकुंशयन् ॥ ५४ ॥
विधूयमानेषु वधूभिरम्बुजेष्वलिव्रजो व्योम जगाम झङ्कृती ।
अमूनि ते चन्द्रमुखीजनोऽधुना धुनाति भानोरिति वा निवेदितुम् ॥५५॥
गतो निलीनप्रियमम्बुजाकरं प्रियामुखभ्रान्तितरेण पङ्कजम् ।
उपांशु चुम्बन्भ्रमरीद्रुताधरो मुमोद कश्चिन्न विवेद तत्तथा ॥ ५६ ॥
अहो चिरोढस्य धिया चिराम्बुजं तिरोहयन्नेकतमेन वीरिभिः ।
धवो नवो यस्य धिया नवाम्बुजं मृदुं च धृत्वाऽन्यतमेन पाणिना ॥५७॥
प्रियं स्वनामग्रहपूर्वमाननभ्रमेण चुम्बन्तमुदीक्ष्य पङ्कजम् ।
सखीषु जातामितगौरवा मुदं बभार काचित्तदचुम्बितापि हि ॥ ५८ ॥
प्रियः सपत्नीवदनं सरोरुहभ्रमेण वेणीस्फुटमालमर्पयन् ।
बलीक्रियेयेहमिति ब्रुवाणया कयापि गाढं परिरभ्य चुम्बितः ॥ ५९ ॥
मृगीदृशां कान्तकराम्बुसेवने स्वियेह कैः सात्विकभावसम्भृतैः ।
ममज्जुरम्भोजवनानि तन्मुखप्रभाजितानीव नदे प्रवर्द्धिते ॥ ६० ॥
प्रिये पुरस्तादथ यन्त्रवारिणाऽभिषिञ्चति प्रान्तनिमीलितेक्षणा ।
पराञ्चि तस्यान्तरदत्तहस्तका न का सकामं म म मेत्यभाषत ॥ ६१ ॥

विलोकमाने जलकेलिसम्भ्रमश्लथोत्तरीयं जघनं घनस्तनी ।
प्रिये परा तज्जघनांशुपद्धतीः पराश्रयन्तीव पयोऽभ्यचारयत् ॥ ६२ ॥
तथा जलं न प्रियपाणियन्त्रजं ततान कस्याश्चन शीतलं वपुः ।
यथा कटाक्षप्रसरः प्रतिस्त्रियो दृगन्तजन्मा ज्वलदग्निलोहितः ॥ ६३ ॥
विपक्षमासिच्य पुरो यदि प्रियोऽमुचत्तमां वारणमस्त्रमञ्जसा ।
हुताशनास्त्रं न कटाक्षलक्षणं तथापि कस्या अपि शान्तिमासदत् ॥६४॥
मनस्विनीमानसवज्रकङ्कटः स्मयः स्मरास्त्रैरविशीर्यते स्म यः ।
जलप्लवैः सप्रियपाणियन्त्रजैः सितासिदण्डैरिव खण्डशः कृतः ॥ ६५ ॥
मनोश्वलग्रन्थिविभेदनोद्यतः क्व मानरत्नं गमितं भवादृशैः ।
इतीव गाढं गलकन्दले प्रियान् विधृत्य नार्यो जलतो विनिर्ययुः ॥ ६६ ॥
नदाद्विनिर्यातमथाङ्गनागणं करावलम्बीकृतकान्तकन्धरम् ।
पयस्तरत्पङ्कजशृङ्गभाषया स्रवत्कुलोपारुधदग्रतः स्मृतम् ॥ ६७ ॥
सदप्यसद्भान्ति वपुष्यनाविलं जलार्द्रभावादृढसङ्गिचीवरम् ।
स्त्रियो दधत्यः स्मरकेलिदौहृदं हृदन्तरा कामवतां वितेनिरे ॥ ६८ ॥

औज्झन्जलाविलमनाविलदेहभासो
वासोऽपरं परिदधुश्च पुरन्ध्रयस्ताः ।
अन्यातिशायिगुणगीतमपि प्रसह्य
वैरङ्गिकं जनयते जडिमैक एव ॥ ६९ ॥

अथ मिथुनसमूहोऽन्योन्यवक्त्रावलोक-
..................श्रीमन्त्रिसुत्रामगृह्यः ।
प्रमथितजलराशिः स्वं निवासं जगाम
त्रिदशगण इवोच्चैरच्युतोपात्तलक्ष्मीः ॥ ७० ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये पुष्पावचयदोलाजलकेलिवर्णनं नाम सप्तमः सर्गः ।

सद्धर्मारभटीनिरस्तनरकः सत्यानुरागी स्वयं
देवो विष्णुरिव प्रमोदयति नः श्रीजैत्रसिंहो मनः ।
यस्य ध्वस्तरजाः सदाचरणजा कुन्देन्दुधामोज्ज्वला
कीर्तिर्देवनदीव दीव्यतितमां विश्वावनीपावनी ॥

# अष्टमः सर्गः ।

वस्तुपालसदृशो दृशोः पथि क्वापि कश्चन समेति वा न वा ।
शत्रुमित्थमिव भानुमान्नवद्वीपमन्यदुपयातुमैहत ॥ १ ॥
स्यन्दनाश्वखुरखातपश्चिमाखर्वपर्वततटीसमुत्थितैः ।
धातुरेणुभिरिवार्यमाऽभवन्नागुडद्रवगुडच्छटारुणः ॥ २ ॥
सान्ध्यमेघदलकैरितस्ततो हिङ्गुलारुणतटैर्विरेजिरे ।
शोणपट्टवसनात्मभी रविस्यन्दनध्वजपटैरिवोद्भटैः ॥ ३ ॥
अस्तशैलशिखरेऽपतन्नभः शाखिपक्वफलमर्कमण्डलम् ।
तद्रसैरिव समुत्सृतैस्ततः सान्ध्यरागविसरैर्भृशायितम् ॥ ४ ॥
पूर्वपर्वतगुहाविनिःसृतध्वान्तभल्लुकभयादिवोच्चकैः ।
नश्यतो दिनकपेर्विवर्त्तितस्याकृतिं दिवकृदाप शोणरुक् ॥ ५ ॥
लुप्यमानपटिमा तमोऽङ्कुरैस्तुङ्गतुङ्गशिखरेषु तस्थुषी ।
रागिणी रुचिवधूर्निजेशितुः प्रैक्षत प्रसवतोऽधिकं वपुः ॥ ६ ॥
वारुणीपरिचयाद्विवारुणीभूतमूर्त्तिरपरोदधेस्तटे ।
व्यालुठत्तरणिरुज्झिताम्बरः किं कुकर्म कृतमायतौ शुभम् ॥ ७ ॥
अस्तमेति भवतामयं रिपुर्गृह्यतां जगदितीव भाषिणः ।
कोटरस्थतमसामिव स्पशावायसाः प्रतिदिशं ववासिरे ॥ ८ ॥
उल्लसद्विटपबाहवो द्रुमा व्याहरन्निव खगारवैरिति
वेधसाऽपह्रियते दिवाकरः किं न धावत हहा दिगीश्वराः ! ॥ ९ ॥
पश्चिमादिगबलोत्तरीयकाम्भोधिवीचिचटुलाञ्चलानिलैः ।
वर्द्धिते सति रविप्रदीपके प्रासरद्भवि निरङ्कुशं तमः ॥ १० ॥
क्षुद्रतामलिनताकलङ्किताभाजनैरुरुतमोनिशाकरैः ।
वीक्षितैरलमितीव पद्मिनी पद्मलोचनमहो न्यमीमिलत् ॥ ११ ॥
तत्क्षणं विरहिणो रथाङ्गयोर्दुःखदावदहनोऽदहन्मनः ।
तद्भुवेव तु वनानि धूम्रया मिश्रितानि परितस्तमिस्रया ॥ १२ ॥
स्वैरिणीजनदृशां रसाञ्जनैः श्यामिकाविजितचिक्कसाञ्जनैः ।
कौशिकप्रकरगोत्रदैवतैस्तामसैः प्रववृते तदैव तैः ॥ १३ ॥
विच्छुटत्तिमिरकुन्तला रवावस्तमीयुषि विभौ दिगङ्गनाः ।
तेनिरे तरलतारकव्रजव्याजमश्रुजलबिन्दुवर्षणम् ॥ १४ ॥
भोजिता यदनु मन्दिरं रवेस्तर्पणार्थमिव वर्णसत्तमाः ।

घस्मरास्तदवमंस्तमोधिकं सज्जकज्जलमिषेण दीपकाः ॥ १५ ॥
कोसिकासरसितैलसञ्चरे वर्तिनालकलिता विरेजिरे ।
कज्जलभ्रमरधोरणीभृतः स्वर्णपङ्कजरुचः प्रदीपकाः ॥ १६ ॥
दीपयष्टिफणिनो निजप्रतिच्छायकुण्डलितभोगशालिनः ।
मल्लिकास्फुटफणोपरिस्थिता रत्नतामबिभरुः प्रदीपकाः ॥ १७ ॥
कालपाशपतितेऽथ भास्वति पूर्वदिक्कुलवधूर्विलापिनी ।
यच्छति स्म निजकौमुदीमिषादन्धकारतिलमिश्रितं पयः ॥ १८ ॥
प्राचिकाचलकुचे नखक्षतं यामिनीयुवतिमूर्ध्नि किंशुकम् ।
व्योमकीरवदने सृपाटिका रत्युदन्वति च विद्रुमाङ्कुरः ॥ १९ ॥
कैरवच्छदकपाटकुञ्चिका मानिनीमदकुरङ्गकर्त्तरी ।
ध्वान्तधान्यलवनैकदात्रिका विश्वशर्मलिपिमात्रिकाकृतिः ॥ २० ॥
अङ्कुशं प्रमददन्तिनस्ततज्यं धनुः कुसुमबाणधन्विनः ।
दुर्जनाशयदशैकबान्धवी वैधवी समुदिता बभौ कला ॥ २१ ॥

( त्रिशेषकम् )

अर्द्धमात्रमुदितं द्युयोषितः स्कन्धलम्बिसुरवाहिनीगुणे ।
अग्रदण्डमणिवल्लकीचये तुन्दतामधित बिम्बमैन्दवम् ॥ २२ ॥
ज्योतिराविरभवत्ततः कला तूर्णमर्द्धमथ पूर्णमूर्त्तिता ।
कालतः किल महोदयं चतुःस्कन्धजल्पितमिवाप चन्द्रमाः ॥ २३ ॥
कामकोलपतिपोत्रमिन्दिरासन्दिका रजनिभालभूषणम् ।
स्वैरयोषिदभिचारमण्डलं विश्वनेत्रजलकेलिपल्वलम् ॥ २४ ॥
दिग्वधूवलयकेलिकन्दुकः कौमुदीमथिनतक्रसारकम् ।
विप्रयुक्तजनयन्त्रगोलकोऽहर्बुभुक्षितचकोरमोदकः ॥ २५ ॥
आतपत्रमिव पूर्वभूभृतः केलिदर्पण इवाम्बरश्रियः ।
आलवाल इव शर्मभूरुहः शोभते स्म सकलोचितः शशी ॥ २६ ॥

( कलापकम् )

भानुमानपरथा तिरोहितः खेलतीति हृदि सम्भृतेर्ष्यया ।
पूर्वया स्वमतिलोहितं तमोऽन्तर्ष्किकोपरि विधुच्छलं दधे ॥ २७ ॥
तारकमुदस्य जम्भजिद्दिग्वधूवदनमञ्जसा विधुः ।
निश्चुचुम्ब करकोटिकुञ्चितध्वान्तकुन्तलमतीव रागवान् ॥ २८ ॥
मानिनीस्मयमसाध्यमायुधैः कौमुदैरिति विचिन्त्य तच्छिदे ।

मङ्क्षु चक्रमिव चन्द्रमण्डलं सस्फुलिङ्गमुडुभिः स्मरोऽमुचत् ॥ २९ ॥
मुक्तमर्यमकरैर्नभोभुवि भ्रष्टमन्धतमसौघदम्भतः ।
चन्द्रमाः स्वकरलीलयाऽदधान्मङ्क्षु विष्णुरिव पर्वतं पुरा ॥ ३० ॥
पुष्कराविकरभूमिकां क्रमैरुल्लिखन्नुदयसत्तमःकृमीन् ।
आवृतोऽयमुडुशावकैः रतेः केलिकुक्कुट इवोत्कटं शशी ॥ ३१ ॥
किं रदैरघटि पारदैरथामार्जि किं नु सुधया दधाविव ।
रोहिणीरमणरोचिरञ्चितं सर्वतो जगदिति व्यतर्क्यत ॥ ३२ ॥
यत्र यत्र शशिनः प्रभाभवत्तत्र तत्र सहचारिलक्ष्मणः ।
कालिकापि पदमासदत्प्रतिच्छायकैतवतया महीतले ॥ ३३ ॥
छायायाऽवनिरुहां दलान्तराविष्टचन्द्रकितचन्द्रिकाभृता ।
प्रासि निर्मलविधूभ्रतोमरश्रेणिविद्धपतितान्धकारता ॥ ३४ ॥
पूरयन्त इव शङ्खमुच्चकैरुन्मिषत्कुमुदचुम्बिनोऽलिनः ।
कूजितैर्युवतिचित्तशायिनं कामभूपमचिरादबोधयन् ॥ ३५ ॥
जागरूकमहसो मनोभुवः शासनादिव तदा मृगीदृशः ।
वल्लभाभिगमनेच्छयाशया मण्डनानि वपुषो वितेनिरे ॥ ३६ ॥
ऐन्दवेपि सति धाम्नि तामसं स्वैरिणीजनमनःप्रियाकरम् ।
तेनिरे मृगदृशः शिरोरुहां धूपनागुरुजधूमवीचिभिः ॥ ३७ ॥
बाणकोशमिव पुष्पधन्विनः केशपाशमरविन्दलोचनाः ।
वृन्तदण्डदलकोशतोमरैः सायकैरिव सुमैरपूरयन् ॥ ३८ ॥
चन्दनद्रवविलेपनच्छवियोर्षितामधिवपुर्व्यराजत ।
गन्धधूलितिलकाङ्कितानन श्वेतवाजिन इव प्रभाभरः ॥ ३९ ॥
योषितां यदिह गोप्यमंशुकाडम्बरः प्रकटयाम्बभूव तत् ।
स्वच्छगौरगुणगुम्फिताकृतिः केवलं न हि पुनः सखीजनः ॥ ४० ॥
योषितो मदनकेलिनाटिकामारिषस्य वदनामृतत्विषः ।
पक्षयोर्विदधिरे द्वयोरपि स्वर्णकुण्डलनिभप्रकुंसकौ ॥ ४१ ॥
प्रेयसो भुजलतापदे महस्तारहारलतिकानिवेशनात् ।
पुष्पबाणगणकाज्ञयैव ताः सन्मुहूर्त्तमचिरादतारयन् ॥ ४२ ॥
कामकेलिसमरे पुरो भटाः पाणयः शितनखक्षुरीभृतः ।
दत्तरत्नकटकैः प्रसादयाञ्चक्रिरे चटुललोचनाजनैः ॥ ४३ ॥
निर्ममे निधुवनोत्सवागमे तोरणस्रगिव मेखलामिषात् ।
कामिनीभिरमलोरुकाञ्चनस्तम्भिकोपरि नितम्बपत्तने ॥ ४४ ॥

यौवनं चलमुपैति नो गतं विग्रहैरलमुपास्यतां प्रियः ।
इत्यवोचदिव झङ्कृतैर्वधूपादयोरभिनिपत्य नूपुरम् ॥ ४५ ॥
चकुराहितविभूषणा यदा योषितो दयितमार्गमार्गणम् ।
ते तदैव पुरतः समाययुः कामदूतकथितक्षणा इव ॥ ४६ ॥
मन्मथातिथिषु तेषु सम्भ्रमादागतेषु भृतरोमविक्रियाः ।
पीवरस्तनफलद्वयेन ता योषितोऽर्घ्यमचिरादढौकयन् ॥ ४७ ॥
आस्तृतोरुशयनीयसन्निधिप्रक्वणन्कलरवेषु तत्क्षणम् ।
वल्लभैः सह सरोजलोचना वासवेश्मसु निवासमादधुः ॥ ४८ ॥
सुभ्रुवामपसृते सखीजनेऽन्तर्विभाजि च रतालयोदरे ।
प्राणवल्लभजुषां प्रदीपका जज्ञिरे सुरतकेलिसाक्षिणः ॥ ४९ ॥
कामुकेषु दयिताधरामृतं निःपिपासुषु मिथोऽप्यथो सुरा ।
फुल्लपद्मवदनालिकूजितैरात्मनोऽवसरमभ्यधादिव ॥ ५० ॥
यन्मिथोप्यपिबतां प्रियार्पितं दम्पती मधु तदोष्ठपल्लवः ।
पीड्यमानवपुरेतयोर्ददावस्तु धैर्यमथवाऽधरे कुतः ॥ ५१ ॥
बोधिते च किमपि प्रसन्नयाऽन्तः प्रविश्य बत मानवत्यपि ।
सागसोऽपि दयितस्य नम्रयभून्नाम तत्कथमवाप्यतेऽन्यथा ॥ ५२ ॥
तामपास्य पिबति प्रियामुखं कामुकेऽर्द्धविनिमीलितेक्षणम् ।
मुग्धयोषिदिव रोषिता सुरा झङ्कृतैर्मधुलिहामिवारुदत् ॥ ५३ ॥
नो तथा मधुरमग्रतस्तया पीतदत्तमभवद्यथा मधु ।
प्रत्ययादिति पपौ स्त्रियोऽधरं कूजितेन सुकृती स्तुवन्निव ॥ ५४ ॥
क्षीवभावमधिगम्य भामिनी वीक्ष्यमाणपदमुल्यमक्षरम् ।
यद्गशायितमुवाच तन्मनोजन्मनो जननमन्त्रतां ययौ ॥ ५५ ॥
मन्मथस्य जनिभूरसो भृशं मूर्त्तिमानिव सितेतरच्छवि ।
पीनमात्रमपि मैथुनोद्यमे कस्य कस्य न हि कम्पमातनोत् ॥ ५६ ॥
सुभ्रुवा दयितया च चुम्बनालिङ्गनैर्विकसदङ्गसम्पदा ।
अन्तरीयमगलन्नितम्बतः कञ्चुकस्य गृहकाणि तुत्रुटुः ॥ ५७ ॥
स्वस्तिकीकृतभुजा कुचग्रहे मीलितोरुयुगलांशुकाहतौ ।
वल्लभेन न न नेति वादिनी पर्यरम्भि दशताऽधरं वधूः ॥ ५८ ॥
निर्दयं रहसि चुम्बति प्रिये मीलितार्द्धनयना नितम्बिनी ।
प्राप तैमिलिकलोलिताकुलीबाध्यमानतिमिलेव कूजनम् ॥ ५९ ॥
मन्मनक्षिदशमन्दिरोदरे देवि ! दैवतमसि त्वमेव हि ।

यत्कृते क्रुधमुपैषि ताः पुनश्चन्द्रपाण्डुलि ! शालभञ्जिकाः ॥ ६० ॥
विग्रहं यदि न मोक्ष्यसीति मे जीव एष भवतस्तु मोक्ष्यति ।
स्थानके नय भुजानिपीडनात्तेन कण्ठगतमेनमञ्जसा ॥ ६१ ॥
कश्चिदेवमभिधाय मानिनीं तद्वचोऽधरदलस्थितं कटु ।
निःपपौ दरनिमीलितेक्षणस्तत्क्षणात्कटरि धूर्तचेष्टितम् ॥ ६२ ॥
(विशेषकम्)

पर्यरम्भि करकृष्टचीवरः प्रौढयोरुकुचया तथा वरः ।
निर्निवास्य सहसा परामहो तद्वदन्तरतया यथोषितम् ॥ ६३ ॥
यासि रे क नु किलेति वादिभिः कङ्कणारवपरैः प्रियाकरैः ।
द्रागधृतः कटकटीरवाससस्तस्करः प्रियकरो व्यकम्पत ॥ ६४ ॥
चाटुमन्त्रचतुरेण केनचिन्मानभूतमवधूय मानिनी ।
लीयते स्म शयनीयमण्डले मान्मथीं ग्रहिलतामिहाद्भुतम् ॥ ६५ ॥
वल्लभेन सह सन्नसङ्गरश्रीपुषोऽन्वितसमाङ्गमञ्जसा ।
तेनिरे रणितवन्ति योषितः कङ्कणानि रणतूर्यविभ्रमम् ॥ ६६ ॥
उल्लसन्नखपदप्रवालकैः स्फारहारलतिकाम्बुधारिभिः ।
अभ्यषिच्यत रतोत्सवे स्मरः कामिनीकुचघटैर्वरोरसि ॥ ६७ ॥
दम्पती बत रतान्तनिर्भरालिङ्गनादपिषतां मणिस्रजम् ।
मत्तयोर्नियतमन्तरागतो दुस्तरां विपदमेति को नहि ॥ ६८ ॥
पञ्चबाणशरशल्यिताः स्त्रियश्चुम्बकानुरसि यद्दधुः प्रियान् ।
रोमकण्टकमिषेण तेन ता निःसृतेषव इवाभितो बभुः ॥ ६९ ॥

इत्थं मन्मथकेलिसङ्गरपरिस्पन्दाय मन्दायितान्
यूनः स्वस्वतनूरनूननखनाराचव्रणं बिभ्रतः ।
व्यापद्वारणमत्तवारणमयं मध्ये प्रविश्योच्चकै-
र्वन्दीवेन्दुरुदञ्चिपाण्डुरकरः प्रोत्साहयामासिवान् ॥ ७० ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि महाकाव्ये चन्द्रोदयवर्णनो नाम अष्टमः सर्गः ।

पातं भैरवमातनोतु रभसादस्ताचलाद्न्वहं
शम्भोर्मौलिवने तपस्यतु कृशो वा जाह्नवीसैकते ।
खण्डीकृत्य ददाह वा क्रतुभुजामात्मानमीशो निशां
श्रीमन्त्रीश्वर जैत्रसिंह ! भवतः साम्यं तथाप्येति न ॥

## नवमः सर्गः ।

सञ्जातनिद्रोऽथ विनिद्रकीर्त्तिः स्वप्नान्तरासौ नितराममात्यः ।
एकाङ्घ्रिमेकं सुरमुत्तरन्तं दिवो ददर्शातिशयैः स्फुरन्तम् ॥ १ ॥
ससर्षिभिस्तैरभिवन्द्यमानमन्वीयमानं च दिशामधीशैः ।
विरञ्चिपुत्रेण धृतातपत्रं ग्रहाधिपाभ्यां धुतचामरं च ॥ २ ॥
पाणौ श्रियं पङ्कजभाजि वामे वामेतरे चापि गिरं दधानम् ।
निजाङ्गभासां भृशमङ्गभाजां नेत्रेषु पीयूषमिव क्षरन्तम् ॥ ३ ॥
( विशेषकम् )

अभ्यापतन्तं तमथो विलोक्य मुत्कौतुकावेशवशो वसन्तः ।
पीठं तु पीठं ददनार्थमर्थमिति ब्रुवन्सत्वरमभ्युदस्थात् ॥ ४ ॥
स्वचेतसीवामितभक्तिचित्रेऽतुङ्गे विशाले कलधौतरम्ये ।
निवेशयामास नवे नृसिंहः सिंहासने तं सह वासवाद्यैः ॥ ५ ॥
तद्दत्तहेमासनमूर्ध्नि कृत्वा वृषीमृषीन्द्रेषु निषेदिवत्सु ।
ददौ तदौचित्यविदेष मन्त्री रत्नार्घमेतस्य ततोऽपरेषाम् ॥ ६ ॥
मानी समानीय स मानितार्थी पाणी प्रमाणीकृतसाधुवृत्तः ।
कृतानतिर्वाचमिमामुवाच भूत्वा पुरो मन्त्रिपुरन्दरस्य ॥ ७ ॥
हे नाथ ! पूर्वं मम चेदमीषामपूर्ववद्भासि विलोचनानाम् ।
तथापि वेत्तीव मनस्तदेवं धर्मोऽसि यस्त्वं जगदेकबन्धुः ॥ ८ ॥
तपोजपोग्योगदयादमैस्त्वामुपासते स्मानिशमङ्गिनो ये ।
तेषामियं गीः समुदेति देहे गेहे च लक्ष्मीरियमभ्युपैति ॥ ९ ॥
पर्यायलब्धोदयदीप्यमानाविमौ विभाधीशविभावरीशौ ।
विश्वप्रकाश्यं कुरुतोऽनिशं यत्किल प्रभाते स खलु प्रभावः ॥ १० ॥
क्व वातभक्षी भुजगः क्व मुस्तालोलो नु कोलो जडधीः क्व कूर्मः ।
क्व ते विसञ्ज्ञा गिरयः क्व मत्ता नागाश्च गामुद्वहसि त्वमेव ॥ ११ ॥
दिशामधीशा मघवादयोऽमी यज्ञज्ञिरे मन्दिरमिन्दिरायाः ।
यज्ज्ञानपात्रं च बभूवुरेते देवर्षयो देव ! स ते प्रभावः ॥ १२ ॥
ग्रीष्माङ्कभीष्मातपदावदाहवारीणि वारीणि वसुन्धरायाम् ।
मुञ्चन्ति यद्वारिमुचः कुतोऽपि स प्राभवः खेलति सुप्रभावः ॥ १३ ॥
इदं स्वसंवेदनतो मनो मे यद्वेत्ति तत्तद् गदितं पुरस्तात् ।
अतः परं त्वद्वदनादशेषं निबोद्धुमिच्छामि विभो ! विशेषम् ॥ १४ ॥

देवोऽथ सामिस्मितपूर्वमम्भोधरध्वनिः स ध्वनयन्दिगन्तान् ।
तमङ्गरङ्गत्पुलकश्चुलुक्यमाणिक्यचाणक्यमिदं बभाषे ॥ १५ ॥
वृषश्चतुष्पादभवं पुराऽहं युगं यदासीत्कृतनामधेयम् ।
ततोऽपरस्मिन्नभवं त्रिपादोऽन्यत्र द्विपादोऽजनिषं ततोऽपि ॥ १६ ॥
हे विश्वबौधेय ! यदात्थ तन्मे सर्वं समीचीनमहीनबुद्धे ।
यद्वेधसा त्वं त्रिदशावलीनामंशानुपादाय विनिर्मितोऽसि ॥ १७ ॥
कलौ युगेऽस्मिन्नयमेक एवावशिष्यते विश्वधुरीणपादः ।
पश्यन्ति तं भूमिभुजो न पादोऽवधार्यतामित्यपि दर्श्यमानम् ॥ १८ ॥
पापेन क्लृप्तच्छविनाऽऽतपत्रच्छायापदेशेन परीतदेहाः ।
धात्रीभुजो धर्म इति प्रतीतं नामापि नाम्नी मम ही सहन्ते ॥ १९ ॥
पुरा सुराज्यश्रियमाप्य मत्तो मामेव सम्प्रत्यवजानते ये ।
धात्रीधवानां कुधियाममीषां को नाम नामापि समाददीत ॥ २० ॥
श्रीमूलराजः स जगाम राजा ययौ च स श्रीजयसिंहदेवः ।
सोमेशयात्राभिरनैषि विश्वमनीषितां स्फातिमहं यकाभ्याम् ॥ २१ ॥
श्रीसिद्धराजः समधत्त राजविहारमाक्रीडनगोपमं मे ।
ग्रामांश्च शत्रुञ्जयसाच्चकार स द्वादशाऽस्मन्महसः प्रवृद्ध्यै ॥ २२ ॥
जगाम च श्रीजयसिंहदेवमाता सती सा मयणल्लदेवी ।
मत्खेलदोला किल सोमनाथपथा यथाऽमोच्यत बाहुलोडः ॥ २३ ॥
यया च सोमेशपथे यथेच्छं तीर्थाध्वनीनोपकृतान्ननोयैः ।
सत्रामनोभिर्जगतोऽपि सत्रागारैरभिग्राहितसंश्रयोऽहम् ॥ २४ ॥
कुमारपालः क्षितिपालरत्नमालेख्यशेषत्वमवाप सोऽपि ।
असूत्रि शत्रुञ्जयरैवताद्रियात्रोत्सवैर्येन ममाभितोषः ॥ २५ ॥
मामेकपादस्य विहारहेतोरालम्बदण्डानिव यो विहारान् ।
कलिं निखन्येव तदीयगर्त्तापूरेषु पूर्वं रचयाञ्चकार ॥ २६ ॥
तैस्तैर्विना तत्कलिकालदोषात्तत्कीर्त्तनैः प्रापि दशाभिदीना ।
तेनाऽधुनाहं वसुधातले हा निराश्रयः किं करवाणि वत्स ! ॥ २७ ॥
केदारसोमेश्वरयोरतीव शीर्णे विषाणे तु वृषात्मनो मे ।
रसायनीव क्षयरोगिदेहे गेहे पुनर्यौवनतामनैषीत् ॥ २८ ॥
यो गच्छदागच्छदनेकसङ्घानकैर्ध्वनद्भिः प्रहसन्निवासीत् ।
स साम्प्रतं तीर्थपथः प्रसूतसिंहीस्तैर्हुंकुरुते.... ॥ २९ ॥

आधाय मूलेश्वरलिङ्गजीर्णोद्धृतिं कृती माण्डलिपत्तने यः ।
श्रीमूलराजक्षितिपालकुलमुद्योतयामास ममावतारम् ॥ ३० ॥
सङ्गीतनादः श्रुतिशुक्तिपेयः श्रेयस्करोऽजायत यत्र पूर्वम् ।
तत्राधुना दुःसमयानुभावाच्चैत्येषु कष्टं करटाश्रटन्ति ॥ ३१ ॥
जैनेन्द्रवैशेषिकसांख्यबौद्धनैयायिका जैमिनयश्च येऽमी ।
ते साम्प्रतं दर्शनिनः क यान्तु कदर्थ्यमाने मयि दुर्युगेन ॥ ३२ ॥
यद्वा खलूक्त्वा बहु वेत्सि सर्वं त्वमेकदेशेऽपि निवेदिते यत् ।
तथा यतेथास्तदमात्यराज ! विलीयतेऽर्त्तिर्मनसो यथा मे ॥ ३३ ॥
अथेति शेषामिव धर्मशिक्षां समाददे यावदसौ वसन्तः ।
तावद्दिनेशाग्रसरप्रतोतानकैर्ध्वनद्भिर्विधुताऽस्य निद्रा ॥ ३४ ॥
अथ श्रुतिपथप्रियं कलितकृत्स्नसम्मूर्च्छनं लयत्रयमनोहरं मधुरतानमासस्वरम् ।
सभैरवगिरः पुरः करमुदस्य वैतालिकाः समानवयसः प्रगे सचिवशक्रमित्यूचिरे ॥
जय त्रिविधवीर ! भूवलयवीरसङ्गीतदोः-
पराक्रम ! जिनक्रमप्रणतिजातराज्योदय ! ।
विभाति हि विभावरी त्यज वसन्त! शय्यां मुदः
श्रयन्तु तव भालभूतलनिभालनैः सेवकाः ॥ ३६ ॥
मिलन्मलयभूरुहामिह हि नीलमोचाजले
लुलन्मकलकामिनीकुरलकन्दलीः कम्पयन् ।
स्मरग्रहिलस्वर्णरीसुरतखेदमुच्छेदय-
न्नयं दिनमुखानिलस्तव सुखाय सञ्जायताम् ॥ ३७ ॥
वने वृणितुमद्य भोः क ननु गंस्यते कथ्यता-
मितीव सति काहले खगकुलस्य कोलाहले ।
समन्यु मिलति त्रसत्यभयमन्यदालम्बते
वधूवरमरागि चोन्मिषति रागितृप्साम्यति ॥ ३८ ॥
इतः कुमुदखण्डवन्मिलति खण्डितालोचनं
विशीर्यति विधूभवत्कुसुममण्डपः कामिनाम् ।
इतश्च रतदीपकाश्रयमपास्य सन्ध्यातप-
च्छलादभिययौ महःपतिमुपेयिवांसं महः ॥ ३९ ॥
इतो हरिहरिन्मुखे चरति भानुमापल्लवो
भचक्रमपचीयते भ्रमति कांदिशीकं तमः ।

इतश्च गगनश्रियो विपणियोषितो वाऽखिलं
विनाश्य वसु चन्द्रमाः पितरि याति रत्नाकरे ॥ ४० ॥
इतो विलुलितालका रमणमन्दिरेभ्यः पण-
स्त्रियो निजगृहानमूः किमपि यान्ति निद्रालसाः ।
इतश्च पटुकुक्कुटस्वनविनीतनिद्रागमाः
पुनन्ति कुलयोषितः प्रतिनिकेतमेताः क्षितीः ॥ ४१ ॥
इतो रजतभाजनं शशिनमङ्कतोयाङ्कितं
सघिष्ण्यलवणं तवोपरि निरस्य विश्वश्रिया ।
सहस्रकरदीपकैरविरितोऽपि चारात्रिकं
विभातभविकक्षणे प्रगुणमेतदासूत्र्यते ॥ ४२ ॥
परोपकृतिमिच्छता भुवनमेतदुत्पित्सता
ऽधुना कमलबन्धुना भगवता विदोषं कृतम् ।
अतो गगनमण्डलाद्व्रजति पात्रमङ्कात्मिका-
मुपानहमिहानने दधदपास्तकान्तिः शशी ॥ ४३ ॥
इतोऽयमुदयन् रविस्त्वयमितोऽस्तमिन्दुः प्रया-
नुभावपि विभागुणप्रगुणबन्धनौ द्वौ मिथः ।
प्रबोधसमये तवोल्लसितकालमार्दङ्गिका-
ङ्कितोडुपथमर्दलानकपुटत्वमासेदतुः ॥ ४४ ॥
असावलसपद्मिनीवनविकाशवैहासिक-
स्तमिस्त्ररिपुरंशुमानुदयकोटिमाटीकते ।
असावपि दधन्निशाशवमिवाङ्कलेखां निशा-
पतिः पिपतिषत्यहो चरमवार्द्धिमस्ताचलात् ॥ ४५ ॥
अनङ्गजगदीशितुर्नमसराजधानीव य-
स्त्रिविष्टपदृगुत्सवस्तिमिरवृष्टिमुष्टिन्धयः ।
स कोऽपि रजनीपतिस्तनुमरीचिरस्ताचले
लुठन्जरठजाहकाकृतिमवाप धिग्वेधसम् ॥ ४६ ॥
व्यदारयदयं हरिः खरकन्दलैर्यत्तमो-
हिरण्यकशिपोरुरः स्फुरितसान्ध्यरागारुणम् ।
इतस्तदसिदण्डवत्तदपतद्ध्रुदण्डो महा-
नितश्च निपपात तत्फलकमण्डलं चन्द्रमाः ॥ ४७ ॥

जपाकुसुमकास्यपाकृषति पुष्पलावी वने
नखक्षतधिया वपुष्यपि दधाति मुग्धाङ्गना ।
महोऽरुणमहर्पतेर्निजचरुस्थमासेवते
कुसुम्भजलशङ्कयांशुकभरेण कौसुम्भिकी ॥ ४८ ॥
पुरोगिरिगुरूदरोपरि सुवर्णकुम्भः क्षणं
नभोङ्गणमयस्वसुर्जठरकूपिकापङ्कजम् ।
तमस्तरलपन्नगावलिविलोपताक्ष्र्यस्त्विषा-
मयं वितपते पतिर्ननु तवेव तेजःकणः ॥ ४९ ॥
कोकः शोकं त्यजति तिमिरं त्रस्तमस्तश्चकोरी-
हर्षस्तर्षान्नलिनमलिनः प्रीतिमन्तः पिबन्ति ।
प्राच्यप्रत्यग्गिरिकरिशिरोगण्डयोर्भास्वदिन्दू
सिन्दूरस्य श्रियमभजतां स्मेरबन्धूकबन्धू ॥ ५० ॥
तुलयति नभोवृक्षे बालः प्रवालमिहार्यमा
विधुरपि मधुच्छत्रं लक्ष्मच्छलोषितमक्षिकः ।
क्षितिरपिहिता देहिच्छायामिषाज्जलजन्तुभि-
र्निमिग्जलधौ पीतेऽगस्त्यानुकारमनूरुणा ॥ ५१ ॥
उत्फालकर्मकरमार्जितमन्दुरान्तर्नद्धाः प्रतीष्टखरकङ्कतमार्ष्टयोऽमी ।
न्यस्तामुरःस्थितिकपाशतटेरिकीर्णक्षारां लिहन्ति लवणेन्द्रशिलां तथाश्वाः॥५२॥
त्वद्वाजिराजिकपयो निजकेलियष्टिमौलौ मुहुः खुरखुरारवरौद्रलास्यम् ।
भानुं प्रति प्रतिकपीन्द्रमुखभ्रमात्तकोपा अमी स्फुटितदाडिमतुल्ययन्ति ॥ ५३ ॥
त्वद्दन्तिदन्तमुशलानि नवार्करश्मि-
रज्यद्वपूंषि मुषितारिवधूविलास ! ।
तां स्मारयन्ति ननु शङ्खमृधोपजातां
भूविद्धवीररुधिरारुणितामवस्थाम् ॥ ५४ ॥
भानुर्भवानिव नवप्रसरत्प्रतापो
विक्रामति त्रिभुवनैकमतो वसन्त ! ।
चन्द्रस्तु शङ्ख इव नश्यति शङ्खगौरं
हित्वा महोऽजनि महो विकसत्कलङ्कम् ॥ ५५ ॥
कुपितकपिकपोलशोणशोचिः
प्रहततमःकरिशोणितैरिवायम् ।

उदयगिरिगुहागृहाग्निरीया-
श्चति हरिरम्बरकाननस्थलीषु ॥ ५६ ॥
विधुरतिविधुरस्तु कृष्णसारे
परगिरिगह्वरवाहिनीवनीषु ।
अधिविशति समन्वितः समन्ता-
दयमपि सम्प्रति तारकामृगीभिः ॥ ५७ ॥
रुचिभिरधवलोऽपि विश्वबोधो
धृतिकलया धवलोऽयमंशुमाली ।
अमृदुरपि मृदुश्च कोकचक्रे
मुदमभिवर्द्धयतां विकर्त्तनोऽपि ॥ ५८ ॥
नमदमरशिरःकिरीटकोटि-
द्युतिभरपल्लविनाङ्घ्रिपीठभासः ।
तव मुदमृषभादयो जिनेन्द्रा
ददतु दिनादिमहे वसन्तपाल! ॥ ५९ ॥
एता वैतालिकानामवहितहृदयंस्तूर्णमाकर्ण्य वाचः
कामं कर्णामृतानि द्रविणवितरणोपात्तकर्णावतारः ।
देवः श्रीवस्तुपालश्चुलुकभवनृपामात्यमालामराल-
स्तल्पं व्यामोहलीलाजलनिधिपुलिनाकारमुज्झाञ्चकार ॥ ६० ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये सूर्योदयवर्णनं नाम नवमः सर्गः ।

---

## दशमः सर्गः ।

..............................[1]वित्तं श्रीः प्रणश्यति च सान्ध्यरागवत् ।
तत्कृतार्थय सुतीर्थयात्रया वैभवं निजमिदं च वै भवम् ॥ ५ ॥

---

1 Space for 6 verses after this is left blank in the ms., as it seems ink had faded on a side of the original palm-leaf ms. from which the present ms. was copied.

तीर्थवन्दनविधित्सया ततः सत्वरो गुरुनिदेशनादिति ।
एत्य वीरधवलं क्षितीन्द्रमित्याह संसदि स मन्त्रिचन्द्रमाः ॥ ६ ॥
क्षत्रियाः कलियुगेन दूषिताः सर्वतोऽपि न तु मामकः प्रभुः ।
कालतोऽप्यखिलधातुजित्वरी श्यामिका न कनकस्य जायते ॥ ७ ॥
पापकालकलिकालसङ्गतोऽप्येति नैव विकृतिं कृती जनः ।
उत्कठोररवकाकपोषितः क्वापि कूजति कटूनि कोकिलः ॥ ८ ॥
तत्कलावपि कला भवत्यसौ जृम्भते कृतयुगस्य पावनी ।
न्यायधर्मविधिषु प्रमाद्यते शश्वदेव न हि देव ! यत्त्वया ॥ ९ ॥
देव ! तीर्थपदवी दवीयसी निर्मिता कलियुगानुषङ्गिना ।
तां नितान्तमदवीयसीं त्वदादेशतो रचयितुं मनोऽस्ति मे ॥ १० ॥
राज्यमेतदुपचीयते श्रिया ज्ञायते जगति सापि धर्मतः ।
जृम्भते स तु सुतीर्थयात्रया सापि देव ! भवति त्वदाज्ञया ॥ ११ ॥
मन्त्रिणा निगदितं महीपतिस्तन्निशम्य मुदितस्तमूचिवान् ।
वस्तुपाल ! मम भालसल्लिपिः क्वापि यस्य सचिवो भवादृशः ॥ १२ ॥
येन येन विधिना विजृम्भते राज्यमेतदधिकाधिकं मम ।
तं तमर्जयितुमिच्छया भवान्मामकं प्रतिशरीरमर्हते ॥ १३ ॥
भूभुजापि तदिति प्रणोदितः श्रीवसन्तसचिवः प्रमोदभाक् ।
तेजपालमथ बन्धुमात्मनो बन्धुवागिति रहस्यभाषत ॥ १४ ॥
आत्मगोत्रगुरुभिर्ममेदमावेदितं सकलतत्त्ववेदिभिः ।
यत्कृतार्थय सुतीर्थयात्रया वैभवं निजमिदं च वै भवम् ॥ १५ ॥
सम्मतं समजनिष्ट भूपतेरप्यदस्तदियमुर्वराधुरा ।
दुर्धरा त्वयि निवेशिता मया स्वांशतः समवतार्य सम्प्रति ॥ १६ ॥
त्वं प्रजा नयसुजातवाक्समावर्जयेः किमपि कोमलैः करैः ।
पश्य कोमलकरो निषेव्यते तारकैरपि शशी न भानुमान् ॥ १७ ॥
दर्शनानि षडपि प्रसादयेरन्नपानवसनैर्यथायथम् ।
आशिषः किल तदाननोदिता वर्द्धयन्ति नृपराज्यसम्पदम् ॥ १८ ॥
मौलिसङ्घटितहस्तसम्पुटस्तत्तथा विनयनम्रकन्धरः ।
वस्तुपालसचिवेन्द्रशासनं तेजपालसचिवः समाददे ॥ १९ ॥
मन्त्रिराड् गुरुनिदेशनात्ततः कौङ्कुमीः प्रतिदिशं स पत्रिकाः ।
प्राहिणोदखिलसङ्घलोकमाह्वातुमोजस्विकदूतपूरुषैः ॥ २० ॥

निस्तुषेऽहनि तदा महीयसा तं महेन महनीयकीर्तयः ।
मङ्क्षु सङ्घपतिनामदीक्षितं चक्रिरे विजयसेनसूरयः ॥ २१ ॥
वासरेऽत्र रुचिरे गुरुक्रमानुज्ञया व्यचित देवतालयम् ।
सङ्घराट् परिसरे पुरो दधन्मङ्गलानकमुदारकेलनम् ॥ २२ ॥
दीयते स्म सुमहान् गुरूदरस्तस्य तत्र हिमवानिवोज्ज्वलः ।
सर्वतोऽपि पटमण्डपावली पादपर्वतनिभाऽस्य चाऽभवत् ॥ २३ ॥
स्यन्दनावलिपदातिमण्डलीस्वीयहास्तिकचमूसमन्वितैः ।
मण्डलाधिपतिभिश्चतुर्भिरावासितं नृपनिदेशितैरिह ॥ २४ ॥
लाटगौडमरुकच्छडाहलावन्तिवङ्गविषयाः समन्ततः ।
तत्र सङ्घपतयः समाययुस्तोयधाविव समस्तसिन्धवः ॥ २५ ॥
आगतां विविधदेशतस्ततः सैष सङ्घजनतां प्रमोदभाक् ।
वस्तुपालसचिवः शुचिक्रियः सत्चकार विविधैरुपायनैः ॥ २६ ॥
संगृहीतयुगयोक्रवाहनस्नेहधान्यजलपात्रभेषजः ।
श्रीतिरस्कृतधनेश्वरः कपर्दम्बिकाविहितसन्निधिः सुधीः ॥ २७ ॥
दीपिकाधरपदातिसूपकृच्छात्रिकादिकपरिग्रहोत्तरः ।
सङ्घसंहतियुतो गुरुक्रमावेदितेऽह्नि विहितोरुमङ्गलः ॥ २८ ॥
वाजिराजिखुरखातमेदिनीधूलीधूसरितभानुमण्डलः ।
वाद्यमानघनमङ्गलानकध्वानडम्बरकरम्बिताम्बरः ॥ २९ ॥
सञ्चरच्छकटसङ्कटीभवन्मार्गपद्धतिरनुद्धताकृतिः ।
सङ्घपङ्कजमुखीमुखोच्चरच्चर्चरीरवपरीतदिङ्मुखः ॥ ३० ॥
तीर्थवन्दनकृते ततः कृती तेजपालमयमात्मनोऽनुजम् ।
तं च वीरधवलं क्षितीन्द्रमापृच्छ्य सङ्घपतिरुच्चचाल सः ॥ ३१ ॥

( कलापकम् )

अग्रतः सुबहु पृष्ठतोन्तरा चापि चापकरवालपाणयः ।
पत्तयोऽस्य पथि सङ्घभूपतेः सङ्घलोकपरिरक्षणं व्यधुः ॥ ३२ ॥
सर्वदा विजयसेनसूरिवाक्पूरितश्रुतिरयं तमश्चयम् ।
ब्रह्मचर्यमहसा महीयसा बाह्यमान्तरमपि व्यपोहयत् ॥ ३३ ॥
तीर्थवर्त्मनि स संघराट् व्रजंस्तीर्थनाथभुवनान्यपूजयत् ।
जीर्णतामुपगतानि यानि तान्युद्दधार च गुरूपदेशतः ॥ ३४ ॥
पङ्कमग्नमथ भग्नमध्वनः सङ्कटे शाकटमुत्कटः श्रिया ।

तन्नियुक्तपुरुषैः समुद्धवेऽसञ्जयच्च स तदाप्तशिल्पिभिः ॥ ३५ ॥
बन्दिगाथकगणान्महात्मनां नामकीर्तनपरान् सुकीर्त्तनः ।
वाञ्छितार्थकरणैः प्रसादयामास चाध्वनि स पेशलध्वनिः ॥ ३६ ॥
वैद्यभेषजभरान्नवाह्नाम्भोभिराभिजनकृत्यविघ्ननम् ।
बाधितं क्षुधितमाहितश्रमं तर्षितं च स्वखिनीचकार सः ॥ ३७ ॥
निःस्वधार्मिकजनाननारतं सच्चकार वसनाशनादिभिः ।
दीनदुःस्थितजनं जनेश्वरः प्राप्तसम्पदयमन्वकम्पत ॥ ३८ ॥
भीतभीतमभयप्रदानतो दानतोयधिरसावमोदयत् ।
तीर्थमार्गनगरेषु शक्तितोऽमोचयच्च नृपबन्धनस्थितान् ॥ ३९ ॥
तन्मनोवसतिनिष्क्रमं किलायाचितोपि पथि सङ्घभूपतिः ।
वाहनद्रविणधुर्यकादिकं यस्य यस्य न स तस्य तद्ददौ ॥ ४० ॥
संहृताभिरनुगोष्ठमञ्जसा फुल्लनेत्रकुमुदाभिरध्वनि ।
वीक्षितः कुमुदिनीनिभाभिराभीरभीरुभिरयं कलानिधिः ॥ ४१ ॥
सङ्घराड् वलभिपत्तनावनीमण्डलेऽतिसुरमण्डलेश्वरः ।
उत्प्रयाणकमचीकरत्कृती सङ्घलोकसुखदप्रयाणकः ॥ ४२ ॥
तत्र सङ्घपतये नवेन्दुवत्पावनो विमलसंज्ञितो गिरिः ।
अङ्गुलीकिसलयाग्रसंज्ञया दर्शितो विजयसेनसूरिभिः ॥ ४३ ॥
पुण्डरीकगणभृत्पुरःसराः कोटिकोटिपतयो जितस्मराः ।
खेचराश्च बहवोऽपि विश्रुतास्तेऽपि पञ्च ननु पाण्डुसूनवः ॥ ४४ ॥
रामवालिशुकशैलकादयः कोटिशश्च यदवः कुमारकाः ।
नारदो द्रविडवालिखिल्यभूनायकाश्च दधिरे यतः शिवम् ॥ ४५ ॥
विंशतिः समधिकार्हतां त्रिभिर्यत्र विश्वमहिता ददौ पदम् ।
एकवेलमपि यस्य यात्रया दुर्गतिर्भवभृतां विलीयते ॥ ४६ ॥
दृश्यते नयनयोः सुधाञ्जनं सोऽयमुच्चतरशृङ्गसङ्गतः ।
धन्यपुण्यतमसङ्घभूपते साम्प्रतं विमलपर्वतः पुरः ॥ ४७ ॥
( पञ्चभिः कुलकम् )

हर्षतस्तमवलोक्य भूधरं सङ्घराट् पटहतानपूर्वकम् ।
सङ्घलोकशकटेषु सर्वतो यन्त्रकेतनपटानलम्बयत् ॥ ४८ ॥
शैलमात्ममनसीव दर्पणे सङ्क्रमय्य सह धर्मबन्धुभिः ।
सङ्घभूपतिरसेवत श्रिया भासिभिः स्नपनचर्चनार्चनैः ॥ ४९ ॥

देवतालयजिनेशितुस्ततः सङ्घलोकगुरुभिः समन्वितः ।
वन्दनस्नपनचर्चनार्चनप्रेक्षणादि विततान संघराट् ॥ ५० ॥
सर्वतोऽपि रसपाकपण्डितैर्निर्मिते रसवतीसमुच्चये ।
तत्प्रियाललितदेव्यथो यतीन् प्रत्यलाभयदतीव भक्तितः ॥ ५१ ॥
तेन सङ्घजनतासु जेमनं तासु निर्मितवतीषु सर्वतः ।
निर्ममे तदनु सङ्घभूभुजा भोजनं तदनु चास्य कान्तया ॥ ५२ ॥
कौतुकेन कलिकालजित्वरं वस्तुपालचरितं विलोक्य तत् ।
भानुमानथ जगाम जल्पितुं तूर्णमेव पुरतः प्रचेतसः ॥ ५३ ॥
सन्ध्यया क्षणिकरागरम्यया संश्रितोज्झितमिदं जगद्दधे ।
यत्तमो द्विजपतिस्तदङ्घ्रिपातमलैरतितरां गवाम्भरैः ॥ ५४ ॥
रोहिणीरमणकान्तिडम्बरे स्वैरमम्बरतले विलासिनि ।
स प्रयाणमथ सङ्घभूपतिर्निर्ममे विमलपर्वतं प्रति ॥ ५५ ॥
आन्तरं रज इव व्यपोहितुं चन्द्रमा गुरुवधूपभोगजम् ।
वाहवाहनसमुत्थितं रजः सान्ध्यमङ्कमिषतो वपुष्यधात् ॥ ५६ ॥
सङ्घयौवतसुचारुचर्चरीगीतलीनमनसः शनैः शनैः ।
गच्छतः सपदि सङ्घभूपतेरस्य सम्मुखमिवाययौ गिरिः ॥ ५७ ॥
पादलिप्तपुरसन्निधौ व्यधादुत्प्रयाणमथ सङ्घपार्थिवः ।
पञ्चवर्णपटमण्डपावलीच्छादितावनितलं समन्ततः ॥ ५८ ॥
पादलिप्तपुरमण्डनं जिनं पार्श्वनाथमथ पापमन्थनः ।
सर्वसंघजनतान्वितः समभ्यर्च्य तीर्थगिरिमारुरोह सः ॥ ५९ ॥
श्रीकपर्दिनमुदीर्णमुत्पुरः संघविघ्नहतिनिघ्नमुत्परः ।
संघभूपतिरुपेत्य पूजयामास मांसलसुवर्णपूजया ॥ ६० ॥
धर्मलाभमुचितं कपर्दिने ते वितीर्य गुरवः ससाधवः ।
संघसंघपतिसंयुतास्ततस्तीर्थनाथभवनं प्रपेदिरे ॥ ६१ ॥
भाविनोऽत्र ननृतुः स्फुरत्कराः केपि केपि लुठदङ्गकान्यदुः ।
आदिनाथमवलोक्य केचन व्याहरञ्जय जिनेति भारतीम् ॥ ६२ ॥
संघराट् समभिसृत्य भूतलन्यस्तभालफलकः कृतानतिः ।
आदिनाथपदयोः प्रसारितोदारबाहुरुपगूहनं व्यधात् ॥ ६३ ॥
भावभासुरमनाः पुरः प्रभोरूर्ध्व एव सुकृती कृताञ्जलिः ।
तन्मुखाहितविलोचनोऽस्तवीत्तं नवीनकविताकिरा गिरा ॥ ६४ ॥

तुभ्यमद्भुतगुणाय भूर्भुवःस्वःस्तुताय भवभीतिभेदिने ।
श्रीयुगादिजिननाथ! योगिनां ध्यानगम्यपरमात्मने नमः ॥ ६५ ॥
भक्तिवार्द्धिलहरीमिति स्तुतिं प्रस्तुतां भगवतोऽभिधाय सः ।
सङ्घलोकगुरुभिः समं शमी व्यातनोत्तदनु चैत्यवन्दनाम् ॥ ६६ ॥
तीर्थकुण्डजलमज्जनोत्तरैः श्वेतवस्त्रमयधौतिशालिभिः ।
निर्मितोरुमुखकोशचारुभिश्चन्दनाम्बुकृतपाणिकङ्कणैः ॥ ६७ ॥
इन्द्रतामुपगतैः सहस्रशो धार्मिकैः सह स धार्मिकाग्रणीः ।
काञ्चनीं कलशपङ्क्तिमाददे जन्मपर्वणि सुपर्वराडिव ॥ ६८ ॥

( विशेषकम् )

भाविभिः स्नपयितुं जगत्प्रभुं हेमकुम्भपटली करे कृता ।
राजते स्म लहरीपरम्परा बिम्बितेव रविबिम्बमण्डली ॥ ६९ ॥
स्नात्रपर्वसमकालमुच्चकैः पेतुरस्खलितसिद्धबुद्धयः ।
भाविनो दुरितभोगिमण्डलीजाङ्गुलीनिभमदम्भवृत्तयः ॥ ७० ॥
वाद्यमानपटहोरुघण्टिकाझल्लरीमुरजशङ्खनिःस्वनैः ।
सद्मपङ्कजदृशामुलूलुगीर्डम्बरे गिरिगुहासु मूर्च्छति ॥ ७१ ॥
सङ्घराट् गुरुसमक्षमादतो धर्मबन्धुभिरथावृतोऽभितः ।
स क्रमेण कलशान् कलाशयः पर्यलोठयदधीशमूर्द्धनि ॥ ७२ ॥

( युग्मम् )

ते पुनः पुनरुपेत्य भाविनस्तीर्थतोयभृतकुम्भमण्डलीम् ।
लोठयन्त ऋषभस्य मूर्द्धनि क्ष्माधरस्य जलदा इवाबभुः ॥ ७३ ॥
चन्दनैणमदकुङ्कुमागुरुस्वेदसारघनसारकर्दमैः ।
निर्ममे तदनु संघपार्थिवस्तीर्थनाथवपुषो विलेपनम् ॥ ७४ ॥
मल्लिकाबकुलजातियूथिकाकेतकाब्जशतपत्रचम्पकैः ।
आदिनाथमथ सैष पूजयामास वासव इवावनीगतः ॥ ७५ ॥
कङ्कणाङ्गदकिरीटकुण्डलस्वर्णदामभिरयं सुधामभिः ।
तं विभूष्य जिनमस्य हस्तयोर्न्यस्तवान्कनकबीजपूरकम् ॥ ७६ ॥
धार्मिकः स परिधामनेकधारूपधामभिरथांशुकैर्व्यधात् ।
यैस्त्रिलोकवनकल्पपादपः पल्लवैरिव जिनो व्यराजत ॥ ७७ ॥
अग्रतो जिनपतेः सुदीपकश्रेणिकामयमकारयत्कृती ।
तत्प्रशस्तिमिव याञ्जनाक्षरैश्चैत्यभित्तिषु लिलेख तत्क्षणात् ॥ ७८ ॥

वीक्ष्य सङ्घमिममुद्यतं भिया यः कलिर्मशकमात्रतामगात् ।
तद्विघातनकृतेऽगुरुच्छिदाधूमधूममथ स व्यपञ्जयत् ॥ ७९ ॥
अक्षतानथ स दक्षतान्वितः सत्फलानि सफलीकृतेप्सितः ।
पक्वमन्नमथ तीर्थकृत्पुरोऽढौकयच्च जलमुज्ज्वलाशयः ॥ ८० ॥
अष्टधा मतिगुणैरलङ्कृतः सोऽष्टधा मदविधानवर्जितः ।
अष्टधेति जिनपूजनं व्यधादष्टधाऽपि निजकर्म हिंसितुम् ॥ ८१ ॥
आदिनाथजगतीजिनानथ सैष सङ्घजनतासमन्वितः ।
चन्दनस्नपनचर्चनार्चनैः कोटिशोऽपि समभावयत्क्रमात् ॥ ८२ ॥
तेन चीनवसनैर्महाध्वजः कल्प्यते स्म जिनमन्दिरोपरि ।
स्वर्गमार्ग इव देहिनां करप्राप्य एव दिवि यो व्यराजत ॥ ८३ ॥
प्रेक्षणक्षणमथो विचक्षणस्तीर्थभर्तुरयमग्रतो व्यधात् ।
नर्त्तकीकुचतटत्रुटन्मणिस्रग्मणिप्रकरपुञ्जितावनि ॥ ८४ ॥
उन्नदत्प्रचुरतूर्यमुच्छलत्पुष्पवृष्टिचलितोरुचामरम् ।
व्यादधेऽथ घनसारवर्त्तिकारात्रिकं जिनपतेरसौ पुरः ॥ ८५ ॥
चैत्यवन्दनविधिं व्यधादथो देवसेवकजनेऽथ सत्क्रियाम् ।
सङ्घभूपतिरवारितं ततः सत्रमत्र समसूत्रयच्च सः ॥ ८६ ॥
सङ्घलोकसहितस्ततो मुखोद्घाटनं व्यधित सङ्घभूपतिः ।
यत्र तीर्थपतिकोशवृद्धये कोटिशो द्रविणराशयोऽमिलन् ॥ ८७ ॥
आदिनाथमथ मोक्तुमक्षमः सन्निधिं पितुरिवास्य संघराट् ।
शेषतीर्थपरिषद्विवंदिषादूयमानहृदयो व्यजिज्ञपत् ॥ ८८ ॥
आनन्दाश्रुविमिश्रनेत्रयुगलो बद्धाञ्जलिः सम्प्रति
क्षिप्त्वा त्वत्पदपङ्कजोपरि शिरः स्वाम्येकमभ्यर्थये ।
चेत्त्वं बन्धुरकारणोऽसि करुणा चेदस्ति ते चेतसि
स्वं विश्वैकनमस्य देव ! मम तद्देयाः पुनर्दर्शनम् ॥ ८९ ॥
इत्थं गद्गदया गिरा प्रभुपदानापृच्छ्य वर्द्धापनं
सङ्गीतेन कपर्दिनश्च पुरतो निर्माय निर्मायधीः ।
अर्थिभ्यः सुतरां धनानि वितरन्सङ्घाधिनाथः स्वयं
सङ्घेनाथ समं गिरेरुदतरत्पुण्यश्रियाऽलङ्कृतः ॥ ९० ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये दशमः सर्गः ।

वृद्धाया: किल सम्प्रति क्षितिपतेः कीर्त्तिश्रियः साम्प्रतं
कीर्त्तिश्रीः पदमाससाद भवतः श्रीवस्तुपालात्मज ! ।
याऽवर्द्धाप्यत दिग्वधूभिरभितस्ताराक्षतैरक्षतैः
दूर्वापत्रनिभाङ्कसङ्कुलशशिस्थालादुपात्तैरिव ॥

# एकादशः सर्गः ।

प्रयाणढक्कानिनदोपहूतसामन्तवर्गोऽयमनर्गलश्रीः ।
प्रभासतीर्थाधिपतिं चुलुक्यमन्त्री नमस्कर्त्तुमथ प्रतस्थे ॥ १ ॥
ढक्कां नदन्तीं तरसा निशम्य रसातिरेकं तुमुलं वितन्वन् ।
समं समन्तादपि सङ्घलोकः प्रयाणकाय प्रगुणो बभूव ॥ २ ॥
पर्याणिताः स्वर्णखलीनवन्तः कशाकरैः सादिभिरादरेण ।
धृतास्तदानीं दिवमुत्पतन्तस्तुरङ्गमा जेतुमिवैन्द्रमश्वम् ॥ ३ ॥
विघट्टयन्तः कविकान्स्वदन्तैर्मुहुर्ग्रीकृतस्कन्धमवाकृतास्याः ।
कोशानलं जेतुमितीव वक्षो निभालयन्ति स्म तदा स्वमश्वाः ॥ ४ ॥
हयोऽभिरन्तुं वडवामिवोच्चैर्वल्गाधरं वल्गु विहेषमाणः ।
तदंसदेशप्रहिताग्रपादः कश्चित्तदा सादिनमारुरोह ॥ ५ ॥
तुरङ्गमीहेषितमात्मदूरे कश्चित्तदाकर्ण्य निरुद्धकर्णः ।
हयो वलद्ग्रीवमुदञ्चितास्यो हिहीति हेषाभिरभाषतेव ॥ ६ ॥
कश्चित्तदाऽश्वोतिशठः स्वकण्ठमुत्प्लुत्य पर्याणखलीनहस्तम् ।
चखाद दन्तैश्चरणैर्जघान द्रुतद्रुतं वाथ पलायते स्म ॥ ७ ॥
पर्याणमुत्प्लुत्य मदादगृह्णन् कश्चित्तदाऽकुट्यत सादिनाऽश्वः ।
यतः प्रभावार्जवमेव चारु क्लेशाय लेशोऽपि कृतो मदस्य ॥ ८ ॥
अथो कुथोद्भासितपृष्ठदेशा विशाललोहोत्तमसारिपीठाः ।
सिन्दूरपूरारुणकुम्भशृङ्गाः शृङ्गारितास्तत्र महे महेभाः ॥ ९ ॥
उदस्तहस्तोपरिदानगन्धलुब्धभ्रमद्भृङ्गकुलास्तदानीम् ।
विरेजिरे मन्त्रिनृपाजिरे ते सश्रीकराङ्का इव कुञ्जरेन्द्राः ॥ १० ॥
वलन्मुखं केपि विकूणिताक्षं साचीकृतास्यं च सहेषमन्ये ।
अश्वा व्यलोकन्त तदाभ्युपेतान् घण्टाटणत्कारयुजो गजेन्द्रान् ॥ ११ ॥
रेभां सुरेभान्तिकमुत्प्रयातान् व्यधुस्तदेभास्तुरगान् विलोक्य ।
तुरङ्गमा अप्यगमा भयेषु सरोषहेषं हिहिहीति चक्रुः ॥ १२ ॥

विलम्बमानध्वजवेणिदण्डाः सचक्रताडङ्कयुजोऽश्वनेत्राः ।
सुवंशनासा युगभ्रूविलासाः सेनामुखानीव रथा विरेजुः ॥ १३ ॥
स्फुरासिवन्तो न तदा समीयुः पदातयः किं तु महोर्मयोऽमी ।
प्रत्यंक्पयोधिप्रहिताः सफेनमीनाः समुद्राधिपसंमुखीनाः ॥ १४ ॥
धनुर्धरास्तत्र सचित्रचापाः सुवर्णतूणीरयुजः समीयुः ।
समुद्रमिन्द्रायुधमुद्वहन्तः सविद्युतस्तोयधरा इवैते ? ॥ १५ ॥
विश्रान्तकान्तस्थुलपीनवक्षोरुहाऽपवाहावलिकीलवन्तः (?) ।
नानावलीका ध्वजिनी सुवृद्धा सा सोमतीर्थाभिमुखी चचाल ॥ १६ ॥
आक्रन्दिनामप्युपरि प्रकामं भारा न्यधीयन्त मरुप्रियाणाम् ।
मूढाः मुधा साहसमुत्सृजन्ति तदन्यथा नैव यदस्ति भावि ॥ १७ ॥
क्रमेलकानां निवहेषु शीघ्रमुत्थाय दीर्घक्रममुच्चिरावी ।
आरूढमात्रेष्वधिपृष्ठदेशेष्वथोष्ट्रपालेषु पलायते स्म ॥ १८ ॥
उच्छूलशीर्षामकलाहिकांस्यतालस्रजोन्तःपुरनादिपादाम् (?) ।
नभो लिहन्तः सहसैव राजा ........................ ॥ १९ ॥
आरुह्य दासेरकमुत्प्रयान्ती दलत्रितम्बाकुलवेणुयष्टिः ।
रंभाय योग्यामभितन्वतीति खिमेर .................... ॥ २० ॥
पट्टांशुकाच्छन्नसुखासनान्तःस्थितावरोधैकविलोकनाय ।
उन्नम्रनम्रीभवति स्म लोको बाढं निगूढं हि चमत्करोति ॥ २१ ॥
तुरङ्गमातङ्गरथाधिरूढैश्छत्रावलिच्छन्नदिगन्तरालैः ।
प्रत्यक्षनक्षत्रगणैरमात्यराजस्तदारब्धजिनेन्द्रपूजः ॥ २२ ॥
उच्चैरथोच्चैःश्रवसं यथेन्द्रस्तुरङ्गराजं सचिवैकराजः ।
पर्याणितं रत्नखलीनमध्यारुरोह नारायणवत्स्वताक्ष्येम् ॥ २३ ॥
सदैव दानक्रमविक्रमेण विनिर्जितः कल्पतरुस्तदानीम् ।
सच्छायमायूरदलातपत्रनिभेन तं सेवितुमाजगाम ॥ २४ ॥
न्यस्यैकमङ्घ्रिं कटके तथैकमुत्कृत्य केशावलिकावलम्बी ।
वल्गाग्रजाग्रत्कृतवल्गपाणिरासादयत्सादिजनस्तुरङ्गान् ॥ २५ ॥
मायूरपिच्छातपवारणाली रराज देवालयवैजयन्त्या ।
आकाशवीथी दलितेन्द्रनीलवर्णाऽवतीर्णा सह गङ्गयेव ॥ २६ ॥
कशाग्रयाघातमवाप्य पञ्चधाराभिरामं तुरगैर्व्रजद्भिः ।
खुराहता मर्दलवद्वदन्ती सैन्यातिभारादिव भू रराम ॥ २७ ॥

खाता खुरैस्तुङ्गभुजः पुरोऽथ समीकृता सिन्धुरपादपातैः ।
रथाङ्गलेखाभिरिला हलाग्रैः सीमन्तिता क्षेत्रमहीव रेजे ॥ २८ ॥
रथा रथाङ्गध्वनिभिर्महेभा रेभाभिरश्वा अपि हेषितेन ।
जनो जनैः शब्दपरम्पराभिरलक्ष्यत क्षोणिरजोऽन्धकारे ॥ २९ ॥
सुवर्णनागास्पदकर्णपाशाः प्रलम्बवेणीरतिमुग्धवाचः ।
दुग्धद्युतिस्निग्धदृशोऽतिमुग्धमुखीः सखीभिः कृतकानुपेताः ॥ ३० ॥
नवोदिताम्भोधरमध्यदेशम्पारुचो लोचकरोचमानाः ।
सौराष्ट्रतत्त्वीरसुगोष्ठकन्या आनन्दयन् दृग्वलनामृतेन ॥ ३१ ॥
रङ्गत्तुरङ्गक्षतभूमिगोलप्रेङ्खोलधूलीधवलीकृताशः ।
कैश्चित्प्रयाणैः सचिवाधिनाथः श्रीसोमनाथस्य पुरं जगाम ॥ ३२ ॥
( विशेषकम् )

सरस्वतीवारिधिवीचिहस्तसञ्चारितैर्यस्य पुरः पुरस्य ।
परस्पराश्लेषविभेदवक्त्रिश्चामर्यमार्च्यत फेनकूटैः ॥ ३३ ॥
तीरस्फुटन्नीरकदम्बकेन बहिः सदा गर्जति यत्र वार्धौ ।
वृथैव सोमेशपिनाकिनोऽग्रे त्रिधूपवेलापटहप्रपञ्चः ॥ ३४ ॥
निर्गच्छदागच्छदनेकरूपसोमेशयात्रालसमानलोकम् ।
दृष्टं तदिष्टं ननु येन तेन प्रभूतदेशाऽपि विलोकिता भूः ॥ ३५ ॥
सोमेशमाराद्धुमुपागतेन जनेन नानाविधकष्टभाजा ।
विलोक्य पौरीवदनानि तूर्णं यत्रैव यात्राफलमाप्यते तत् ॥ ३६ ॥
चन्द्रप्रभस्याष्टमतीर्थभर्तुर्यद्देशनामन्दिरमिन्दिरायुक् ।
उपेत्य मर्त्यामरदैत्यनाथैर्निषेव्यते संसृतिशातनाय ॥ ३७ ॥
पुरस्य तस्योपवनीषु भृत्यैः प्रदीयमानेषु निवासकेषु ।
स्नानाय सामन्तजनेन साकं मन्त्रीश्वरोऽगात्प्रियमेलतीर्थे ॥ ३८ ॥
सरस्वतीसङ्गतमच्युतश्रीनिवासमुद्यत्तरवारिभीमम् ।
गभीरमुच्चैरविलङ्घितस्वमर्यादमाक्रान्तदिगन्तदेशम् ॥ ३९ ॥
यथाभिलाषं सुमनोवितीर्णविभूतिमात्मानमिवाम्बुराशिम् ।
तत्रैक्षतामात्यपतिः स्वयं तु न ग्राहशीलो न जडाशयश्च ॥ ४० ॥
( युग्मम् )

गम्भीरगम्भीरनिधिः प्रमोदशालीव गर्जन्विहसंश्च फेनैः ।
कल्लोलहस्तैरविलोलचित्तं मन्त्रीश्वरं मित्रमिवालिलिङ्ग ॥ ४१ ॥

तत्र द्विजेभ्यः सचिवैकरत्नं रत्नैस्तथा हर्षपरो ववर्ष ।
यथा यथा तैरकृथाकरश्रीरत्नाकरो मूर्त इव प्रतीतः ॥ ४२ ॥
अथाश्वमत्तेभरथाधिरूढैः सामन्तलोकैः परितः परीतः ।
दिगन्तकुक्षिम्भरिभूरिभेरीभाङ्कारधिक्कारितसिन्धुशब्दैः ॥ ४३ ॥
तदागमोदारमुदेव चैत्यध्वजाभुजाकल्पितताण्डवं सः ।
चन्द्रप्रभं नन्तुमना महेशं तत्पत्तनं मन्त्रिवरो विवेश ॥ ४४ ॥
( युग्मम् )
तत्र क्षणे संभृतभूरिभेरीभाङ्कारमाकर्ण्य पुराङ्गनानाम् ।
वसन्तवीक्षातृषितेक्षणानामेवंविधं चेष्टितमाविरास ॥ ४५ ॥
औत्सुक्यतो हारलतां नितम्बे निवेश्य कण्ठे रसनां च काचित् ।
ताडङ्कमाधाय कलाचिकायां कर्णे पुनः कङ्कणमुच्चकार ॥ ४६ ॥
काचित्तथा कन्दुकमेकबाहौ निवेश्य नीलं गजचर्मलीलम् ।
सन्दृश्यमाणैककुचार्द्धनारीश्वरत्वमूहेऽधिगता गवाक्षम् ॥ ४७ ॥
काचित्तदानीं किल भोजयन्ती शिशुं स्वमाकर्णिततूर्यनादा ।
हित्वा तदासन्नबिडालमेकं कृत्वा कटीरे गृहमारुरोह ॥ ४८ ॥
काचित्तदानीं गृहकर्म हित्वा प्लुता च्छुटन्नीविलुलत्पटान्ता ।
श्वश्रूतिरस्कारवचांसि पादमञ्जीरनादैस्तिरयाम्बभूव ॥ ४९ ॥
अट्टालमारोहति किञ्च फालविलोलपादं ललनासमूहे ।
पाणिन्धमत्वेन बभूव भङ्गः परस्परं काञ्चनकङ्कणानाम् ॥ ५० ॥
भ्रूचापमुत्क्षिप्य कटाक्षबाणैर्वातायनस्था सचिवं जघान ।
मां हन्ति कामस्तदयं सनाभिस्तस्येति रोषादिव कापि योषा ॥ ५१ ॥
असौ प्रविष्टो हृदि मे वसन्तो निःसृत्य मा यातु कथञ्चनापि ।
इतीव काचिद्वृतिमुच्चकार रोमाञ्चकूटोत्कटकण्टकौघैः ॥ ५२ ॥
हर्तुं मनः श्रीसचिवेश्वरस्य यदैव काचिच्चकमे तदासौ ।
स्मरेण कोदण्डकरेण रोपै रोमाञ्चरूपैरभिकीलितैव ॥ ५३ ॥
काचित्तदा सात्विकभावभिन्ना विमुत्य केशान्पुनराबबन्ध ।
प्रकाशयन्ती क्षणमूरुमूलं काचिद्दुकूलं च तथा चकार ॥ ५४ ॥
उज्जृम्भमाणा करिकुम्भतुङ्गं स्तनद्वयं मन्त्रिणि दर्शयन्ती ।
करञ्चितोदञ्चितबाहुवल्लिर्बभञ्ज गात्राणि च काचिदेव ॥ ५५ ॥
गवाक्षभित्तौ मणिनिर्मितायां सङ्क्रान्तमूर्तिं सचिवाधिनाथम् ।

काचित्कुचाभ्यां पुलकाञ्चिताभ्यामपीडयत्प्रीतिनिमीलिताक्षी ॥ ५६ ॥
काचिच्छलाकाञ्जनरेखया श्रीवस्तुपालं मुकुरे लिखित्वा ।
चुचुम्ब रोमाञ्चितगण्डभित्तिर्निमीलितोन्मिलितलोचनान्ता ॥ ५७ ॥
नार्यो बभुः स्फाटिककुट्टिमाग्रसुवर्णवातायनसन्निविष्टाः ।
आकाशमार्गेण वसन्तवीक्षागता इव स्वर्वनिता विमानैः ॥ ५८ ॥
रूपस्थितध्यानपराभिरेवं निरूप्यमाणः पुरकामिनीभिः ।
श्रीसोमनाथस्य पिनाकपाणेः प्रासादमासादयति स्म मन्त्री ॥ ५९ ॥
ब्रह्माण्डभाण्डोपममण्डपश्रीरत्युच्चकैः किं बहु वर्ण्यते यः ।
महीतलव्योमतलान्तरालप्रमाणदण्डश्रियमादधाति ॥ ६० ॥
यस्मिन्सदा धूपघटीसमुत्थधूमोर्मिभिः साम्बुघनाघनाभे ।
विद्युद्भ्रमं बिभ्रति शातकुम्भकुम्भध्वजोक्षाधिपतोरणानि ॥ ६१ ॥
गजेन्द्रकुम्भादवतीर्य शम्भोरुपात्तभावः सपरिच्छदोपि ।
पाणिन्धमं यात्रिकधोरणीभिरमात्यराजस्तमथो विवेश ॥ ६२ ॥
सद्धर्मविद्धर्मशिलामुपेत्य दण्डप्रणामं विदधे प्रणामम् ।
गत्वा च गर्भालयमध्यमध्यालिलिङ्ग सोमेश्वरमष्टमूर्त्तिम् ॥ ६३ ॥
अथो तमेव स्नपयन् हृदिस्थं प्रमोदजैर्लोचनकुम्भतोयैः ।
पञ्चामृतैः पञ्चशरप्रपञ्चजितं जितारिः स्नपयाम्बभूव ॥ ६४ ॥
कर्पूरकृष्णागुरुचन्दनादिविलेपनैर्विश्वगुरुं विलिप्य ।
विश्रं दशग्रीवशिरोधरास्त्रैरमात्यशम्भुः सुरभीचकार ॥ ६५ ॥
अन्यूनभक्तिः स वरप्रसूनवृन्देन वृन्दारकवन्दनीयम् ।
वृषाङ्कमभ्यर्च्य वृषायमाणोऽनुकूलयामास ततो दुकूलैः ॥ ६६ ॥
कर्पूरकृष्णागुरुधूपधूमवीचीभिरुच्चै रचयाञ्चकार ।
तथा घनानेष घनानशेषश्रेयोवनी संववृधे यथास्य ॥ ६७ ॥
नान्दीमनादीनवचित्तवृत्तिः स ताण्डवं ताण्डवितप्रतापः ।
सुगीतमुच्चैर्दलितावगीतः पुरः पुरारेः प्रथयाञ्चकार ॥ ६८ ॥
संवेद्यवेदी सचिवोऽनिवेद्यनैवेद्यमालां विमलान्तरात्मा ।
अढौकयत्प्रौढगुणप्ररूढकीर्त्तिः पुरः कृत्तिभृतः कृती सः ॥ ६९ ॥
अकारयद्दीपतमप्रदीपैर्विराजिविश्वार्त्तितमःप्रदीपैः ।
नीराजनं राजसभावतंसः श्रीसोमनाथस्य यथोचितं सः ॥ ७० ॥
श्रीसोमनाथाय सुवर्णरूप्यकूप्यस्वरूपाः सचिवेश्वरेण ।

तुलापुमांसो बहुशोऽतुलेनादीयन्त विस्मापितविश्वलोकाः ॥ ७१ ॥
स दानपात्रेषु सदानवश्रीः श्रीदानवद्वेषिसमानवेषः ।
दानं निदानं सततोत्सवानां ददौ सदौचित्यविवेचनेन ॥ ७२ ॥
शत्रुञ्जयस्वामिसमानभक्त्या चन्द्रप्रभं तीर्थविभुं तथा तम् ।
मन्त्री नमस्कृत्य चचाल तस्मादुत्कण्ठितो रैवतदैवताय ॥ ७३ ॥
रजस्तदा सैन्यपदाभिघाताद्विन्दुप्रपातादिव खं प्रपेदे ।
ततोपि सन्तप्तमिवार्कतापभारेण वारिण्युदधेः पपात ॥ ७४ ॥
धावत्तुरङ्गाग्रपदैरमन्दमाकृष्य नीतामिव सन्निधानम् ।
अथोज्जयन्ताचलराजभूमिं श्रीवस्तुपालध्वजिनी जगाम ॥ ७५ ॥
न यावदुच्चैः सचिवांशुमाली व्यालीढविश्वो महसाभ्युपैति ।
तावत्पुरः सान्ध्यघनाघनाभैरवेष्टयताद्रिः पटमण्डपौघैः ॥ ७६ ॥
इतस्ततःस्थापितकेकिपत्रातपत्रभूतद्रुवनोपरुद्धैः ।
गुरूदरैरुन्नतरै रराज पर्यन्तशैलैरिव शैलराजः ॥ ७७ ॥
रथाश्वमत्तेभवती व्यतीतलङ्घ्याध्वभागा गतिलाघवेन ।
उपत्यकायामथ रैवताद्रेरियाय सेना सचिवेश्वरस्य ॥ ७८ ॥
सैन्याय तस्मै समुपागताय तदश्वहेषाप्रतिशब्दवेषा ।
अगीयत स्वागतगीरिवोच्चैर्गुहामुखे रैवतपर्वतेन ॥ ७९ ॥
त्वराकरास्फालनसंज्ञयाश्वान् संस्थाप्य हौकारकृतोऽश्ववाराः ।
उत्तेरुरुत्तेरितधावितेभ्यस्तेभ्यः परिस्वेदकणाङ्कितास्याः ॥ ८० ॥
रथा व्यराजन्त वधूर्धराग्रजाग्रन्मुखा द्वारि निवासकानाम् ।
तूष्णीं वितीर्णोभयगल्लहस्ता इवात्मधुर्योक्षवियोगदुःखात् ॥ ८१ ॥
उत्तार्यमाणेपि भरातिरेके चक्रन्दुरुच्चैः करभास्तदानीम् ।
विधीयमानेऽपि हिते नितान्तं कान्तं वचो हि ब्रुवते न मूढाः ॥ ८२ ॥
बब्बूलचूला मृदुलोपशाखाः सुखं लिहन्तो लुलदोष्ठमुष्ट्राः ।
स्वैरं विचेरुः परितो महाद्रिमुत्त्रासयन्तो वनसैरभाणि ॥ ८३ ॥
निपाय्य तोयानि महीरुहाणां छायासु बद्धाः परितो महोक्षाः ।
फूत्कारिघोणाः परिवृत्य घासमुद्गालयन्ति स्म सुखं निषण्णाः ॥ ८४ ॥
उत्तार्य पर्याणखलीनकानि लघूकृताऽपांशुरभूमिकासु ।
उद्वेल्लमाना लुठदङ्गकामीवाश्वा विलेलुः प्रतिनेमिशैलम् ॥ ८५ ॥
मत्पृष्ठतः स्वामिजनोऽवतीर्णः कथं कथं नैव विलङ्घिता भूः ।

इत्यन्तरा खेदपरा इवाश्वाः वितेनिरे भूमिविलोकनानि ॥ ८६ ॥
मुक्तश्रमाः शैलनदीषु पीताम्भसोऽभिषेकाम्बुकणान्किरन्तः ।
वण्ठैरनीयन्त कुहत्कृतोश्वाः सङ्घविपावासपुरोवनीषु ॥ ८७ ॥
वल्लीषु बद्धा हरितानि नम्रीकृतांसमश्वा मुदमुद्वहन्तः ।
पुच्छैः प्रशंसन्त इवोल्लसद्भिश्चवर्भुरदन्तनादाः (?)॥ ८८ ॥
तदास्यवैकृत्यमुदीक्ष्य सद्यस्त्रिकं परावृत्य वनायुदेशे ।
कस्मिंश्चिदामुश्चति पादतालं खिखीति कृत्वा कपिरुत्पपात ॥ ८९ ॥
आवर्त्तनाभ्यः स्मितपद्मनेत्राश्चक्रस्तनाडम्बरमुद्वहन्त्यः ।
इभैरभुज्यन्त समुद्रपत्न्यो बलीयसां वा किमसाध्यमस्ति ॥ ९० ॥
गर्जन्त उच्चैः सुचिरं किरन्तो मदाम्बु जम्बालितधूलिजालम् ।
गुरूदराद्रिं परितः करीन्द्रा बभुः पयोदा इव नीलभासः ॥ ९१ ॥
वैतालिकाः प्रस्तुतनित्यकालक्रियापरे सङ्घपतौ वसन्ते ।
अनूदितां रैवतकाद्रिपादैर्भोगावलीं पेठुरकुण्ठवाचः ॥ ९२ ॥
विलोकनीयाजनि रैवतस्य गिरेः परिष्वङ्गपरैव तस्य ।
निवासमालाद्रिमभासमाना दृष्ट्यां प्रकाशावधि भासमाना ॥ ९३ ॥

किं ब्रूमो बहुधा चुलुक्यसचिवश्रेष्ठानुरागादिव
प्राप्तं पृष्ठत एव पत्तनमिति भ्रान्तिं समातन्वति ।
एतस्मिन्कटके गृहोपवनिकालक्ष्मीरुपात्ता वनैः
क्रीडापर्वतता च पादगिरिभिश्चूलाचलालम्बिभिः ॥ ९४ ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनाम्नि
महाकाव्ये प्रभासतीर्थाधिपयात्रावर्णनं नाम एकादशः सर्गः ।

सप्ताम्भोधिषु नादिमर्दलतुलां तन्वत्सु दिग्मण्डली-
दामोद्दामरितामराद्रिसुमहद्वंशाग्ररङ्गाङ्गणे ।
कीर्तिर्वंशनटीव नृत्यति तव श्रीवस्तुपालात्मज!
प्रीतः पश्यति तां च किं च गणनातीतो गणः स्वर्गिणाम् ॥

---

## द्वादशः सर्गः ।

अथ कृतसुकृतश्चुलुक्यभर्तुः सचिवशचीपतिरुन्मिषत्प्रमोदः ।
गिरिवरमुपसृत्य रैवताख्यं रुचिरमसुं चिरकालमालुलोके ॥ १ ॥

अविरलसरलप्रवालजालप्रसृमरकाननकदम्बकैतवेन ।
अधिभवजलधि ज्वलन्तमुच्चैर्ज्वलनमिवारुणमौर्वमप्रमेयम् ॥ २ ॥
कटकतटशिलानिपातचूर्णीभवदुरुनिर्झरशीकरोत्करेण ।
कलियुगमलिने नितान्तमभ्युक्षणमिव भूमितलेऽखिले क्षिपन्तम् ॥ ३ ॥
अनुवनमलिकोकिलामयूरैरनुनदमाटिबकोटकङ्ककोकैः ।
अनुसरसि मरालसारसाद्यैर्मुखरितमूर्जितकूजितैः समन्तात् ॥ ४ ॥
जिनबलिपटहाऽसमाननादैरुपरि घनाघनगर्जितैश्च मध्ये ।
मदगजरसितैरधश्च वाचालितगगनाष्टदिगन्तभूमिदेशम् ॥ ५ ॥
समुदितवनवह्निदह्यमानागरुवनधूमगुरूर्मिकानिकायैः ।
निजवपुरवगुण्ठितप्रवृष्टाम्बुदशुचिवस्त्रमिवोपधूपयन्तम् ॥ ६ ॥
क्वचिदपि चमरैः क्वचिच्च पूरैः क्वचन मृगैः क्वचिदेव चाच्छभल्लैः ।
क्वचिदपि कपिभिः क्वचिद्वराहैः क्वचन गजैरपि राजमानकुञ्जम् ॥ ७ ॥
अनुपथमुपरूढभूतशाखासुखविनिविष्टशुकाभिनन्द्यमानैः ।
दिशि दिशि च गमागमप्रवृत्तैर्जिनपतियात्रिकधोरणैरुपेतम् ॥ ८ ॥
जिनपतिमहिमप्रशान्तवैरव्यसनतया चिररमेणचित्रकेण ।
विषधरनकुलेन हस्तिसिंहेन च कृतसौहृदमुन्दिरौतुना च ॥ ९ ॥
अनुदिशमकृशप्रभाविभिन्नान्धतमसवृत्तिभिरौषधीवितानैः ।
जिनपतिमभिराद्धुमागतानाममृतभुजां निवहैरिवोपरुद्धम् ॥ १० ॥
अनलसरसवश्यधातुखन्याञ्जनविषपादपपादिकल्पहस्तैः ।
अनुतटतटिनीगुहानिकुञ्जं दिशि दिशि योगिजनैरुपास्यमानम् ॥ ११ ॥
( एकादशभिः कुलकम् )

त्विषां दधानो वशमुज्जयन्तं विडम्बयन्नन्दितमुज्जयन्तम् ।
उत्पश्यमानो गिरिमुज्जयन्तं श्रिया सुरेन्द्राचलमुज्जयन्तम् ॥ १२ ॥
श्रीवस्तुपालो जगदेकवीरः श्रीवस्तुपालो जगदे कवीरः ।
वैतालिकेनाचलसंस्तवेन वैतालिकेनाचलसंस्तवेन ॥ १३ ॥ ( युग्मम् )
अचल एष चुलुक्यसभामणे ! सकलभः सहरिः कटकोत्कटः ।
सचिवभूप ! भवानिव भासते सकलभः सहरिः कटकोत्कटः ॥ १४ ॥
विभाति कैलास इवेश्वरेण शिवाङ्कभाजा वृषभासितेन ।
श्रीनेमिनाथेन कृताधिवासः शिवाङ्कभाजा वृषभासितेन ॥ १५ ॥
अयमुदञ्चति सिन्धुरसङ्गतैर्विकुलकैरधिसिन्धुरसं गतैः ।

वनचरैः सुखसारसखञ्जनैरधिरतोपि च सारसखञ्जनैः ॥ १६ ॥
अस्मिन्गणः केसरिणामहिंस्रः कृशो दरीसङ्गमलालसानाम् ।
प्रभावतो योगमहाघनानां कृशोदरीसङ्गमलाऽलसानाम् ॥ १७ ॥
अयमितः कलधौतशिखावलैरधिगतः कलकेकिशिखावलैः ।
अनुसरः पृथुकैरवशोभितः करिवधूपृथुकैरवशोभितः ॥ १८ ॥
लभेत दन्ताभिभवान्विधुं तुदन्विधुन्तुदस्फाटिकशृङ्गसङ्गतम् ।
न जातु जायेत शितिर्विभावरी विभावरीयोदृषदीह भूधरे ॥ १९ ॥
मुनिसंहतिः सकरुणा करुणादिकवृक्षपुष्पसुरभिः सुरभिः ।
इह सर्वतः सकमला कमलाकरसन्ततिर्विकसिताकसिता ॥ २० ॥
अयं निकुञ्जानि बिभर्त्ति पापहन्ताप्सरोविभ्रमरोचितानि ।
हन्ताप्सरोविभ्रमरोचितानि शृङ्गाणि शृङ्गारयते च शैलः ॥ २१ ॥
इह खेचरवृन्दमुदारमते सुरतेन नदीषु मुदा रमते ।
अधिपङ्कजसंहति सा रसिका नहि वल्लभमुज्झति सारसिका ॥ २२ ॥
सुवर्णसंभारभृतो नमेरुवनीतलक्रीडितपूर्वविष्णोः ।
एतस्य साधर्म्यमुपैति सोऽपि सुवर्णसंभारभृतो न मेरुः ॥ २३ ॥
अत्र संफुल्लनीपावनीपावनी वल्गुवेणीलताभासिता भासिता ।
वल्लकीवादने बन्धुरा बन्धुरा दृश्यते चेदहो किन्नरी किन्नरी ॥ २४ ॥
अस्मिन्घनाः श्यामलतासु कान्ता लतासु कान्तासहिताः सुरेभाः ।
हितासु रेभासु समीरयन्तः समीरयन्तः सततं गतानि ॥ २५ ॥
ननु वनराजी राजति मन्त्रिन्नतिपृथुलकुचा मृदुलवलीका ।
दिव्यस्त्रीणामपि ततिरस्मिन्नतिपृथुलकुचा मृदुलवलीका ॥ २६ ॥
पर्यायसङ्कोचविकाशवद्भिः सूर्येन्दुवंश्यैररविन्दवृन्दैः ।
इहोच्चकैरत्नतटांशुभिन्नध्वान्तेऽनुमीयेत दिनत्रियामा ॥ २७ ॥
भ्रमरहितविकचसुमनोमुनिभिर्विनिकाममयमितो नूनम् ।
भ्रमरहितविकचसुमनोमुनिभिर्विनिकाममयमितोऽनूनम् ॥ २८ ॥
स्फाटिकशृङ्गव्यवहितमूर्त्तिकरटिघटामुपलक्ष्य ..........लः ।
..................सपदि मृगेन्द्रोऽमुष्मिन्पतति विलक्ष्यः ॥ २९ ॥
वनान्यमुष्मिन्परितो विभान्ति सदा नदन्तीन्द्रवशाकुलानि ।
चैत्यानि च प्रेक्षणकोत्सवेन सदानदन्तीन्द्रवशाकुलानि ॥ ३० ॥
इह नदमाला वहति मनोहृतिकरतरवारिरुहाणि ।

ननु सचिवेश ! यशांसि भवानिव करतरवारिरुहाणि ॥ ३१ ॥
अत्रस्थायी भवतु मुदे वो नेमी देवो नेमी रतिपतिमन्युध्वंसी ।
मन्युध्वंसीव गुणनिकाये गौरीकाये गौरीव सति निकामं यस्य ॥ ३२ ॥

श्रीनेमिचैत्यमभितः सुरसप्रचारै-
स्तारैरुदारतरशुक्तिभवानुकारैः ।
आपूरिताखिलनतोन्नतशृङ्गदेशः
पृथ्वीवधूमुकुटतामयमेति शैलः ॥ ३३ ॥

कण्ठेकालः साम्बुभिः शेषभागे भस्मोद्धूली व्यम्बुभिश्चाम्बुवाहैः ।
शीर्षप्रेङ्खद्वल्लरीभिर्जटावान् साक्षादग्रे ते गिरीशो गिरीशः ॥ ३४ ॥
तन्वते धवलताभृतः स्फुरच्चित्रकाः प्रबलभीप्रपञ्चिनः ।
मत्तवारणमनोहरा गिरेरस्य पादगिरयो गृहायितम् ॥ ३५ ॥
इह विविधमणीप्रकाशगौणीकृतशुचिरोचिरधित्यकावनीषु ।
विहरति हरिदश्व एष शाखामृग इव केवलपिङ्गलांशुलोमा ॥ ३६ ॥
स्निग्धाञ्जनद्युतिभृतः कनकावदातं तेजोन्तरा कलयतः प्रतिगर्जतश्च ।
अस्याम्बुदस्य च परिक्षरतः पयांसि प्रेक्षापरः परमहो यदि वायुरेव ॥३७॥

श्लथयति न यदास्मिन्खेचरी मानमुद्रां
मृदुलपदविलासं बोधिता कोकिलाभिः ।
कुपित इव तदानीं भापयन्गर्जनादै-
र्नयति नियतमेतां भर्तृकण्ठं पयोदः ॥ ३८ ॥

अत्र रात्रिमरुदेणचक्षुषां स्तेनवद्धरति मानसम्पदम् ।
सागसि प्रियतमे करोत्यहो तेन बद्धरति मानसं पदम् ॥ ३९ ॥
प्रालम्बवानिव निपातिषु निर्झरेषु कोटीरवानिव जिने शिरसि प्रतिष्ठे ।
अस्तं विधावुदयमंशुमति प्रयाति ताडङ्कवानिव विराजति शैलराजः॥४०॥
स्वर्दण्डान्वितममरापगादुकूलं दिक्पुत्रीकलितमुडुव्रजावचूलम् ।
एतस्य क्षितिधरनायकस्य मूर्ध्नि व्योमेदं श्रयति महातपत्रलीलाम् ॥४१॥
नागार्जुनेनार्जुनशक्तिना दृषन्मयो महानत्र दशारमण्डपः ।
कीर्णोऽस्ति साकं पशुवाटवेदिकैकस्तम्भसौधाम्बुवल्लरिकादिभिः ॥४२॥
राजीमतीपाणिनिपीडनोद्यमे विलोक्य भोज्यार्थमुपाहृतान्पशून् ।
संसारनिर्विण्णमना जिनाधिपः शिवैकसोपानमिवैनमासदत् ॥ ४३ ॥
इह प्रसूनैर्ऋतवो निरन्तरं षडप्युपास्तिं रचयन्ति नेमिनः ।

पर्यायवृत्तिर्न मता मनीषिणां धर्मार्जने श्रीरियमित्वरा यतः ॥ ४४ ॥
श्रीनेमिनाथस्य जगत्त्रयीशितुः सेवासु हेवाकितचित्तवृत्तिभिः ।
उपत्यकामुष्य नरैर्निरन्तरं निचीयते किञ्च सुरैरधित्यका ॥ ४५ ॥
भावप्रपातिवरकोकनदान्वितोऽयं भावप्रपातिवरकोकनदान्वितोऽयम् ।
देव ! क्षमाधरसमान ! महागिरीश ! देवक्षमाधरसमानमहागिरीशः ॥४६॥

श्रीनेमिः कर्णधारः प्रवहणति भवाम्भोनिधौ पर्वतोऽयं
कूपाः शृङ्गाणि शाम्बादिकसुरलयनीपञ्जरीबन्धुरूपाः ।
अत्रारित्रावलीत्वं सततमुभयतः शाखिनामुल्लसन्त्यः
शाखाः पाषाणसन्धिप्रकरभवमरुत्कम्प्यमानाः श्रयन्ते ॥ ४७ ॥

कैलासस्य यथालकाऽचलपतेरस्योपकण्ठावनौ
मुक्ताजालविशालसालवलयं देवानुजः स्वाख्यया ।
तेजःपालपुरं पुरं विरचयाञ्चक्रे यदन्तःस्थितं
चैत्यं पार्श्वजिनस्य नायकमणिप्रागल्भ्यमभ्यस्यति ॥ ४८ ॥

तीरेऽस्यैव कुमारदेविजननीश्रेयःकृतेऽकारयत्
कासारं सुकृतैकसारभवनः श्रेयान्स एवानुजः ।
यद्वारीणि निपीय पङ्कजरजोहारीणि धुन्वन् शिरः
श्लाघां सङ्घजनः करोति मुदितो यस्यादितो जन्मनः ॥ ४९ ॥

इत्येवं बत रैवतक्षितिधरव्यावर्णनापण्डनौ
तेजःपालपुरप्रथामवितथामाकर्ण्य वैतालिकात् ।
प्रीतात्मा गुरुसङ्घलोकसहितो गत्वात्र मन्त्रीश्वरः
श्रीवामेयजिनार्चनं विरचयाञ्चक्रेऽतिशक्रः श्रिया ॥ ५० ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये रैवतकगिरिवर्णनं नाम द्वादशः सर्गः ।

आधारः पन्नगानां पतिरवनिधरग्रामणीरेष मध्ये
प्राच्यप्रत्यक्पयोध्योः सिचयपरिचयः कण्टकश्चन्द्रलोकः ।
आस्यं च स्वर्गलोकस्त्रिदशपुरसरिद्वीचयः पल्लवाः श्री-
मन्त्रीन्दो वस्तुपालात्मज ! तव यशसः पूर्णकुम्भस्य पश्य ॥

# त्रयोदशः सर्गः ।

अथादितीर्थेशमुपत्यकापुरीवतंसमभ्यर्च्य वसन्तसञ्ज्ञितः ।
सङ्घाधिनाथो गुरुसङ्घसंयुतस्तं रैवतं पर्वतमारुरोह सः ॥ १ ॥
गिरीन्द्रमारूढवतोऽस्य सानुषु स्थिता ददत्योऽखिलवैः किलाशिषः ।
शाखाभुजोल्लासितपल्लवाञ्चलैर्निरुञ्छनानीव लता वितेनिरे ॥ २ ॥
सङ्घेशिता नेमिजिनेशितुस्ततः प्रासादमासादयति स्म सादरः ।
बलेन यः केतुकरेण कल्मषच्छिदार्थमाकारयतीव देहिनः ॥ ३ ॥
तस्मिन्नसौ सङ्घयुतो जिनेश्वरं श्रीनेमिनामानममानमानसः ।
विलोक्य केकीव पुरो नवाम्बुदं भेजे मुदं बाष्पकदम्बितेक्षणः ॥ ४ ॥
महीतलोत्तंसितमौलिमण्डलस्ततो जिनाखण्डलमेनमादृतः ।
प्रणम्य सम्यक्कविताग्रुणः कृती स देवदैत्यस्तुतमस्तवीदिति ॥ ५ ॥
तुभ्यं महानन्दसरोजभास्वते पारेतमोयोगिविलोकितात्मने ।
श्रीनेमिनाथ ! स्मरदर्पदारिणे त्रैधं त्रिकालैकविदे नमो नमः ॥ ६ ॥
स्तुत्वेति तीर्थङ्करमाकरो धियामयं नयज्ञो गुरुभिः समन्वितः ।
समाहितो निर्मितचैत्यवन्दनः स्नात्रक्रमं कर्तुमधादुपक्रमम् ॥ ७ ॥
पयोजघण्टापटहोरुझल्लरीमृदङ्गभेरीरवभङ्गिसङ्गिनि ।
सुश्राविकामङ्गलगीतिडम्बरे गिरेर्गरीयःशिखरेषु मूर्च्छति ॥ ८ ॥
सुक्षीरमुख्यैरमृतैर्यथाक्रमं कर्पूरमुख्यैरपि सैष पञ्चभिः ।
असिस्नपत्तीर्थपतिं समन्वितः सुश्रावकैः काञ्चनकुम्भपाणिभिः ॥ ९ ॥

(युग्मम्)

गजेन्द्रकुण्डाम्बुभृतैर्महर्द्धिभिः कुम्भैः कराम्भोजसलीलनामितैः ।
ततोऽपि जायापतयो निरन्तरं जिनेश्वरं ते स्नपयाम्बभूविरे ॥ १० ॥
आत्मानुकूलप्रकृतिः कृतादरो दुकूलपाणिः परमेशितुर्वपुः ।
न्यमार्जयत्सङ्घपतिः समाहितो जन्माभिषेके मरुतामिवेश्वरः ॥ ११ ॥
कस्तूरिकाचन्द्रसुचन्दनद्रवैः कक्कोलकृष्णागुरुपङ्कमिश्रितैः ।
कृतास्यकोशः सविकोशमुत्ततो लिलेप तीर्थेशमलेपमानसः ॥ १२ ॥
महर्द्धिभिर्भक्तिसमिद्धवासनस्तैस्तैः समस्तैनसि खण्डनापरः ।
अपूजयत्पूजितकर्मकर्मठः पूजाप्रकारैर्जगदीशमष्टभिः ॥ १३ ॥
उदंशुरत्नाङ्कुरभक्तिभासिभिर्विभूषणैस्तेन विभूषितो विभुः ।
श्रीनेमिनाथोऽसितदेहदीधितिः समुल्लसद्विद्युदिवाम्बुदो व्यभात् ॥ १४ ॥

अनेकवर्णैः शितिकान्तिभिर्महान् महांशुकैस्तेन जिनेश्वरोऽर्चितः ।
भाति स्म सान्ध्यैरयमेव पर्वतो वनोपवीतः परितो घनैरिव ॥ १५ ॥
महाध्वजोऽराजत राजतप्रभैः पट्टांशुकैस्तेन जिनालयोपरि ।
विनिर्मितो निर्मितपापनिष्कृतिर्गाङ्गप्रवाहो हिमवद्गिराविव ॥ १६ ॥
सङ्घाधिपः सर्वजनैः समं ततः समन्ततः स्नात्रविलेपनार्चनैः ।
सम्भाव्य भव्योऽयमवन्दत क्रमादतः क्रमांस्तज्जगतीगतार्हताम् ॥ १७ ॥
गुरोः क्रमाग्रोपगतः शमिक्रियागुरोरयं पूरितविश्ववाञ्छितः ।
प्रेक्ष्यां पुरस्तीर्थपतेः सुरासुरप्रेक्ष्यां ततः कारयति स्म सङ्घयुक् ॥ १८ ॥
अयं ततो मङ्गलतूर्यमण्डलप्रतिस्वनत्रासितदुर्युगस्मयः ।
प्रभोः पुरस्ताद्धनसारदीपकैरारात्रिकं यात्रिकसत्तमो व्यधात् ॥ १९ ॥
विधाय धीमानथ चैत्यवन्दनां गुरूपदेशं च निशम्य भावतः ।
तत्र क्षणादेव स देवसेवकव्रजेषु सत्कारमकारयत्कृती ॥ २० ॥
अथाम्बिकालोकनसाम्बसानुषु प्रद्युम्नशृङ्गेष्वधिरुह्य सङ्घयुक् ।
समाहितः स्नात्रविलेपनार्चनप्रेक्ष्यादिकं सर्वमसावसाधयत् ॥ २१ ॥
अवारितं सत्रमसूत्रयत्ततस्तत्राभितस्त्रासितकल्मषोदयः ।
प्रीतो यदालोकत एव गाथकप्रतिस्वनैरस्य जगौ यशो नगः ॥ २२ ॥
निसर्गतो दुर्गतिदौस्थ्यपाटनक्षमं मुखोद्घाटनपर्व सर्वथा ।
चकार संघेन समं जिनेशितुर्विकाशलक्ष्मीरथ कोशवृद्धये ॥ २३ ॥
राजीमती यत्र सती सुतीव्रतो वैराग्यतः स्वाभरणान्यचूर्णयत् ।
तन्मृत्तिकापिण्डमथात्मवेश्मनो देवालये पूजयितुं जनोऽग्रहीत् ॥ २४ ॥
यदुज्जयन्ताचलचूलिकागतः श्रीवस्तुपालो निकटप्रवर्त्तिनि ।
स्वनाम चन्द्रे लिखति स्म नाम तच्चिह्नापदेशादवलोक्यते जनैः ॥ २५ ॥
अथोच्चकैर्गद्गदवागुदश्रुदृग्युगः पुनर्दर्शनदानयाच्ञया ।
कथञ्चिदापृच्छ्य स तीर्थपार्थिवं गिरेः समं सङ्घजनैरवातरत् ॥ २६ ॥
पन्थाः शिवः स्यात्तव गच्छतो निजां पुरीं पुनर्दर्शनमेतदस्त्विति ।
श्रीनेमिशैलोऽम्बुदगर्जिभाषया वसन्तपालं समभाषतेव सः ॥ २७ ॥
समुत्तरन्सङ्घजनोऽतिकौतुकी गिरेः कषाश्मप्रतिमेषु सानुषु ।
लिलेख हेमोर्मिकया प्रकाशिनीं यात्राप्रशस्तिं निजनामचिह्निताम् ॥२८॥
नीरन्ध्रशैलद्रुममण्डलीतलप्रयायिनं तं जिनयात्रिकव्रजम् ।
पस्पर्श पादैर्न तमोपहारकृन्महा महापापभयादिवार्यमा ॥ २९ ॥

फलानि काश्चित्कुसुमानि काश्चिद्द्रुमावलीनां किसलानि का अपि ।
विचित्य तज्ज्ञानतिकौतुकेन तन्नामान्यपृच्छन्पथि सङ्घबालिकाः ॥३०॥
स्वाधीनभक्तिः फलपुष्पपल्लवश्रीरस्ति यूयं विजिहीत नः कथम् ।
इतीव कूजत्पिकनादिल्ली नगद्रुमावली सङ्घजनानभाषत ॥ ३१ ॥
सा पावनी नेमिजिनेन्द्रपर्वतादुत्तीर्य पूर्वाभिमुखी प्रयायिनी ।
भूरिप्रवाहा पथि सङ्घधोरणी रेजे हिमाद्रेरिव जह्नुकन्यका ॥ ३२ ॥
परःसहस्रा यतयः परःशताः गणेशितारः किमु वा ब्रवीमहि ।
वसन्तसङ्घे जिनदर्शनात्मनां को वेद सङ्ख्यामपि कोविदाग्रणीः ॥ ३३ ॥
सुवासिनीसंहतिचारुचर्चरीगानोपहूताः पथि सङ्घमन्वगुः ।
यथा तथा तत्रसुरेणपङ्क्त्यो नासीरदासेरकनादभीषिताः ॥ ३४ ॥
एके समाकर्ण्य सुचारुचर्चरीगीतानि सङ्घानुगमं वितेनिरे ।
एके पुनस्तत्प्रतिशब्दमोहिता मृगास्तदानीं गिरिराजमभ्ययुः ॥ ३५ ॥
वसन्तनामाक्षरवन्ति चर्चरीगीतानि तत्कालमधीत्य पर्वतः ।
प्रतिस्वनैस्तत्परिपाटिदानतो वनेचरीणां गुरुतामशिश्रियत् ॥ ३६ ॥
पुलिन्द्रकाणां युगलानि पर्वतप्रस्थोपरिस्थानि पथि प्रसृत्वरम् ।
व्यालोकयन्सङ्घमिमं किमित्यहो ब्रवीति भाषीणि भयात्परस्परम् ॥३७॥
अयं किमिन्द्रः किमु वा दिवाकरो निशाकरो वा कुसुमाकरोऽपि वा ।
वसन्तपालं कृतविस्मया इति व्यलोकयन्वर्त्मनि वन्यदेवताः ॥ ३८ ॥
पुरो नदन्मङ्गलतूर्यमण्डलप्रतिस्वनैः शैलगुहाविनिःसृताः ।
दृषद्विकीर्णा इव तत्प्रभावतः सङ्घं न सिंहाः पथि यान्तमापतन् ॥ ३९ ॥
वसन्तनाम्नः किल सङ्घभूभृतः प्रतापसम्पद्दलितोरुविक्रमः ।
उपद्रवं चोरगणश्चकार न प्रसह्य सङ्घे गिरिमार्गवर्तिनि ॥ ४० ॥
नीरन्ध्रशाखा वितताऽवनीरुहामतः प्रयान्तं निजधाम लीलया ।
ततापं सङ्घं निजतापसम्पदा वसन्तभीत्येव दिवाकरोऽपि न ॥ ४१ ॥
वीङ्खोग्रवामीवृषवाहवाहनक्षुण्णावनीतोऽनिलनीतमम्बरे ।
रजः सना सङ्घजमातपत्रतां बभार चण्डांशुकरोपरोधकृत् ॥ ४२ ॥
ग्रामाकरद्रोणमडम्बपत्तनान्यनेकशः सङ्घनृपो विलङ्घ्य सः ।
समस्तसङ्घेन समन्वितः समाययौ पुरे गूर्जरनिर्जरेशितुः ॥ ४३ ॥
प्रत्यालयं द्वारभृतोरुतोरणं प्रत्यहमुद्दङ्कितचारुकेतनम् ।
तदागमे तत्प्रतिवीथिकुङ्कुमच्छटोत्तरं पौरजनः पुरं व्यधात् ॥ ४४ ॥

इन्द्रः सहोपेन्द्र इव स्मरो यथा समाधवो भानुरिवारुणान्वितः ।
सतेजपालः प्रतिपन्नबन्धुताप्रसादसम्पादितसम्मदस्ततः ॥ ४५ ॥
तस्यााययौ सम्मुखमुल्लसन्मुखप्रभापराभूतविभावरीविभुः ।
श्रीवीरपूर्वो धवलः क्षितीश्वरः सेनारजोनश्वरदिग्व्यवस्थितिः ॥ ४६ ॥
( युग्मम् )

उत्तीर्य सङ्घाधिपतिस्तुरङ्गमादमुष्य यावत्कुरुते नमस्कृतिम् ।
तावत्प्रसादोल्लसितेन भूभुजा दृढं भुजाभ्यामुपगूढ एव सः ॥ ४७ ॥
श्रीतेजपालः प्रमदाश्रुपूरितेक्षणः क्षणादग्रजमेनमग्नमत् ।
श्रीवस्तुपालः परिरभ्य तं पुनश्चुचुम्ब मौलौ विकसत्तनूरुहः ॥ ४८ ॥
जानीयमौजन्यजुषः परस्परं नार्यस्तदानीं परिरेभिरेऽभितः ।
घटोन्नतैः सङ्घटितेतरेतरस्तनैः सुदूरं विनिवारितोदराः ॥ ४९ ॥
चुलुक्यवंशार्णवपूर्णचन्द्रमाः प्राग्वाटगोत्राम्बुधिकैरवं ततः ।
वसन्तपालं समुवाच वाचया नृपः सुधासारसमानसारया ॥ ५० ॥
तीर्थेषु निर्विघ्नमयि ! प्रकाम्यया विधाय यात्रां समुपागतो भवान् ।
अयीदमारोग्यतमं वपुस्तव श्रीसङ्घलोकेन समं समन्ततः ॥ ५१ ॥
अयि ! क्वचिद्वर्त्मनि तीर्थभूभृतामयं न चौरैश्चरटैरुपद्रुतः ।
न श्वापदैः सिद्धिपदैषिणस्तव श्रीसङ्घसङ्घातजनो महामते ! ॥ ५२ ॥
अयि प्रसन्नास्त्वयि तीर्थदेवताः सर्वेप्यजायन्त निवेद्यतामदः ।
इतीरिते वीरनृपेण सादरं वसन्तपालस्त्विति वाचमूचिवान् ॥ ५३ ॥
तीर्थेषु यात्रामधिसूत्र्य सर्वतो निर्विघ्नकामो यदिहाहमागमम् ।
तत्ते विभो ! शश्वदयं शुभोदयी पदप्रसादप्रसरो विजृम्भते ॥ ५४ ॥
चौरा हता वर्त्मनि तीर्थभूभृतां कुर्युः कथं सङ्घजनेषु वैशसम् ।
यस्मादमुष्मिंस्तव देव ! शासने विजृम्भमाणे यदि सन्ति ते श्रुतौ॥५५॥
प्रसत्तिभाजो मयि तीर्थदेवता बतात्र सर्वेप्यभवन्कथं नहि ।
यदेवमभ्यागमनाभिभाषणप्रवृत्तिमेतां त्वमसूत्रयः प्रभो ! ॥ ५६ ॥
परं च यत्पुण्यमुपार्जितं मया सोमेशदामोदरमुख्ययात्रया ।
तन्माङ्गलिक्यीकृतमेव देव ! ते सुस्वामिने दुष्पतिकार ! सर्वथा ॥ ५७ ॥
श्रुत्वेति संघाधिपतेर्गरीयसीमसौ गिरं तेन पुरस्कृतस्ततः ।
अभ्येत्य देवालयदेवदैवतं ननाम राजा मुदितो यथाविधि ॥ ५८ ॥
सङ्घाधिनाथः सुरनाथसन्निभं विभुं भुवस्तं भुवनैकभूषणः ।

प्रधानवस्त्राभरणैरनेकधा संस्कृत्य सौधाय सुधीर्व्यसर्जयत् ॥ ५९ ॥
गुरूपदिष्टेऽहनि सङ्घनायकः स्नातो युतः संघजनैरनेकशः ।
ऋद्ध्या महत्या प्रविवेश तत्पुरं पुरन्ध्रिनीरन्ध्रसमूहवीक्षितः ॥ ६० ॥
पूजा विशेषात्सविशेषमानसस्ततान स श्रीजिनराजवेश्मसु ।
ददौ च वाञ्छाधिकमर्थिनामहो दानं स्वकामानिव कल्पपादपः ॥ ६१ ॥
शृङ्गारभारालसगात्रयष्टयः पुराङ्गनाः पुष्कलरूपसम्पदः ।
तमङ्ग वर्द्धापयितुं तदालये तदाविशन्नक्षतपात्रपाणयः ॥ ६२ ॥
तदाज्ञया तज्ज्ञजनाभिसम्भृतस्तन्मन्दिरे मन्दरशैलसम्पदि ।
विधातुमुच्चैरथ देवभोजनं बभूव भूयानभितोऽप्युपक्रमः ॥ ६३ ॥
मुक्तावचूलाञ्चितचारुपद्मकान्विता व्यताड्यन्त वितानपङ्क्तयः ।
तस्मिन्निबद्धाः कदलीभिरुच्चकैः सार्कं च माकन्दकतोरणस्रजः ॥ ६४ ॥
कस्तूरिकाकुङ्कुममण्डलावलीविराजितायां मणिकुट्टिमावनौ ।
तत्र व्यधीयन्त विधूस्रकान्तयो मुक्ताकणैः स्वस्तिकराजराजयः ॥ ६५ ॥
बभूव पक्वान्नमनेकधैकतः सव्यञ्जनाऽस्मिन् रसवत्यथान्यतः ।
ताम्बूलपुष्पादिरुपस्करस्तथैकतोऽन्यतश्चांशुकसंचयो महान् ॥ ६६ ॥
अथ प्रकामं प्रतिलाभितव्रतिव्रजोऽथ सङ्घाधिपतिर्यथाविधि ।
निमन्त्र्य भक्त्यादरपूर्वमञ्जसा महायशाः सङ्घजनानभोजयत् ॥ ६७ ॥
अभ्यर्चयामास च पुष्पदामभिः श्रीखण्डताम्बूलसदंशकैरपि ।
स वस्त्रपूजां गुरुभक्तिभासितो गुरूपदेशाद् द्युतिमानपि व्यधात् ॥६८॥
अनेकमित्रद्विजराजमन्मुनिश्रेणीगुरुभ्यः कविमण्डलाय च ।
श्रीवस्तुपालो बहुधा तदाम्बरं विश्राणयन्विश्वसृजो व्यशिष्यत ॥६९॥
प्रत्येकमुच्चैरनुयानपूर्वकं सन्मान्य सन्मान्यकृताञ्जलिः कृती ।
तांस्तांश्च संघानथ सङ्घपार्थिवो निजं निजं देशमभि व्यसर्जयत् ॥७०॥
निजानुजस्कन्धनिवेशितं पुरा स प्राज्यसाम्राज्यधुरांशमात्मनः ।
श्रीवस्तुपालः पुनरेव लीलया दध्रे भुवो भारमिवादिशूकरः ॥ ७१ ॥

भूभारं दधतश्च गूर्जरपतेस्तस्योपधुर्यो महा-
मन्त्री बुद्धिनियन्त्रितारिनिवहः श्रीवस्तुपालः कृती ।
राज्यं प्राज्यमयं पराक्रममयं त्यागैकलीलामयं
धर्मोद्धारमयं सदा नयमयं पाति स्म सम्यन्मयम् ॥ ७२ ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि
महाकाव्ये रैवतकयात्रावर्णनं नाम त्रयोदशः सर्गः ।

त्वचं केचित्केचित्पललमपरेऽस्थीनि रभसा-
दसूनप्यात्मीयानहह ! ददिरे केऽपि कृतिनः ।
प्रियां प्राणेभ्योऽपि क्वचिदपि जयन्त ! क्षितितले
महात्मन्नर्थिभ्यस्त्वमिव नहि कोपि श्रियमदात् ॥

---

## चतुर्दशः सर्गः

धर्मः शर्मनिबन्धनं तनुमतां धर्मः कुकर्मद्रुम-
प्लोषे तत्क्षणमाशुशुक्षणिरिति श्रुत्वा गुरूणां गिरः ।
तत्तस्य स्थितये वसन्तसचिवः पृथ्व्यामथाकारय-
द्धर्मस्थानततिं पुरेषु गिरिषु ग्रामेष्वरण्येषु च ॥ १ ॥
प्रत्यद्रि प्रतिपत्तनं प्रतिपुरं श्रीवस्तुपालः कृती
धर्मस्थानपरम्परां यदकरोत्तं्धुक्रमूहामहे ।
येनैतद्भुजहस्तसाटकमरुद्वीचिं विना कः क्षम-
स्तत्कीर्त्तेर्भुवनभ्रमश्रममपाकर्त्तुं समन्तादपि ॥ २ ॥
आशाराजसुतेऽत्र दुर्युगमहाकल्पे समुज्जृम्भिते
मर्यादामवधूय कीर्त्तिजलधिः क्षोणीमुदप्लावयत् ।
तत्तत्कारितचारुचैत्यपटलीचञ्चत्पताकापट-
व्यूहव्याजवपुः पिपर्त्ति गगनाभोगं यदूर्मिव्रजः ॥ ३ ॥
नासीन्नास्ति न वा भविष्यति भुवि ब्रह्मन्वसन्तो यथा
त्वद्विज्ञानशिलाकिका यदि पुमानेष्णोयमे···नघम् (?) ।
इत्याख्यातुमिवैतदाहितमहाप्रासादमालामिषा-
दङ्गुल्योऽत्र सुपर्वराजिकलिताः दिग्भिः समुत्तम्भिताः ॥ ४ ॥
पुष्पोद्यानगणः स कोपि सकलक्ष्मापत्रलेखायित-
स्तत्तत्कारितचैत्यपूजनकृते मन्त्रीन्दुना कारितः ।
यः साक्षादरघट्टभाङ्कृतिभरैर्भेरीजयोद्घोषिणी-
रुच्चैर्वादयतीव तीर्थमहसानेनैव भग्ने कलौ ॥ ५ ॥
तत्तत्तीर्थपथप्रसृत्वरजनप्रोद्दामखेदच्छिदा-
लङ्कर्मीणपयांसि मन्त्रिमुकुटः सोऽयं सरांसि व्यधात् ।
यत्राम्भोजवनीवनीपकमहो मत्तालिनां पेटकं
प्रोद्गुञ्जत्पटु गायतीव तगरश्वेतं यदीयं यशः ॥ ६ ॥

तास्ताः पौषधशालिकाः प्रतिपुरं तेनैव मन्त्रीन्दुना-
ऽकार्यन्ताद्भुतधाम धार्मिकदृशां सौहित्यसम्पत्कृतः।
नित्यं यासु यतिव्रजो विधूजिनः सिद्धान्तपाठाप्लुतै-
स्तत्पुण्यद्रुमसेवनव्यतिकरेषूद्यानपालीयति ॥ ७ ॥
तास्ता ब्रह्मपुरीः पुरीपुरन्दरपुरीगीतोदयः सत्क्रिया-
धारः कारयति स्म भस्मितकलिः श्रीवस्तुपालः कृती।
यासामम्बरलम्बिसौधवलभीविश्रान्तमूर्त्तिः क्षणं
यस्मै स्वस्तिकरोति सोऽपि मुदितो देवः पतिर्यज्वनाम् ॥ ८ ॥
मन्त्रीन्दुः करुणापरः प्रतिपुरं प्रत्यद्रितीर्थं प्रति-
ग्रामं चाप्रतिमः प्रतिस्थलमयं तत्तत्प्रतिप्रान्तरम्।
अम्भःसत्रमसूत्रयज्जितसुधासारं यदीयं पयः
पायम्पायममुष्य गायति यशो वीथीषु पान्थो जनः ॥ ९ ॥
किं ब्रूमः श्रमनिःसहा वयममी श्रीवस्तुपालोऽवनौ
धर्मस्थानपरम्परां व्यधित यामुज्ञासितारिव्रजः।
तामाख्यातुमपि क्षमा न कवयो व्योम्नीव तारावली-
मेकेनैव दिनेन ये कवयितुं शक्ताः प्रबन्धानपि ॥ १० ॥
चेतश्चित्रपटेऽनुभावलिखितं तत्कालमेणीदृशः
कस्याश्चित्प्रतिरूपमस्य धिषणादृग्गोचरं तन्वती।
एकस्मिन्समये समेत्य पलितव्याजेन तत्कर्णयो-
राचख्यौ सुविचक्षणा किल जरेत्याहन्त्रिका दूतिका ॥ ११ ॥
त्वं विश्वेऽत्र विवेकवानसि पशुः कामार्जुनी सा पुन-
स्त्वं दुर्भेदभिदो धियः पदमसि ग्रावा तु चिन्तामणिः।
त्वं चिद्रूपशिरोमणिः परमचिद्रूपः स कल्पद्रुम-
स्तन्मन्त्रीशवदान्य! कः किल भवेत्तुल्यो वदान्यस्तव ॥ १२ ॥
श्रीमन्त्रीश वसन्तपाल! भवतः प्रौढप्रतापानल-
ज्वालाभिर्जलधावगाधसलिलेऽप्यस्मिन् भृशं शुष्यति।
आदास्यन् भुवनोपकारकरणे नीराणि मेघाः कुतो
दानिन्! दानजलैरमुं यदि भवान्नापूरयिष्यत्पुनः ॥ १३ ॥
अत्यर्थं तव दानपात्रततये भूदानलीलायितं
श्रुत्वा संसदि गीयमानमुरगीवृन्देन वैरोचनः।

कृष्णेऽभ्यर्थिनि तादृशीं भिलषदक्ष्मादानितामात्मनः
स्मारंस्मारमुदारशेखरह्रिया न्यञ्चन्मुखो म्लायति ॥ १४ ॥
फुल्लत्कैरवभैरवप्रहसितश्वेतं त्वदीयं यशः
श्रुत्वा स्वर्नगरीनरेन्द्रसदसि श्रीधर्मदेवाङ्गजा ।
नाम्ना सद्गतिरुद्गतान्यपुरुषद्वेषा किमाचक्ष्यते
देव ! त्वय्यनुरागिणीच्छति दिशामीशानकीशानिव ॥ १५ ॥
काङ्क्षन्ती भवतः करग्रहमियं श्रेष्ठीन्दुमप्यन्वहं
त्वद्दोःश्लेषमना न हारमपि सा कण्ठे समालम्बते ।
सा ते मूर्च्छिषु सादरा न कुरुते वीणाक्वणेऽपि श्रुतिं
त्वद्वक्षःशयनार्थिनी सुभग ! सा शेते न तूलीष्वपि ॥ १६ ॥
देव ! त्वद्विरहोल्बणा रणरणानाबिभ्रती बिभ्यती
चन्द्राद्याति सखीरपास्य भवनोत्सङ्गे कुरङ्गेक्षणा ।
तत्रापि स्मितरत्नभित्तिषु निजास्यैन्दुप्रतिच्छन्दकात्
त्रस्ता त्वन्मनसि प्रवेष्टुमबला सा केवलं रोदिति ॥ १७ ॥
तद्दुःखानि तदीयमातरि मुहुः श्रद्धाभिधायां भृशं
शीप्स्यन्त्यामथ विप्रलम्भतरला पीयूषयाच्ञापदे
मातः पायय वस्तुपालमिति वाक्प्रान्तेऽनिमेषाक्षतां
निन्दन्ती हृदि सा त्रपानतमुखी निःश्वस्य मोहं गता ॥ १८ ॥
क्रोडीकृत्य निजाङ्गजामथ जगौ श्रद्धापि मा खिद्यथा
वेत्से सर्वमतः परं द्रुतमभिप्रेतं करिष्यामि ते ।
इत्येतामनुशास्य कान्तवचनैरेकान्तमेत्यात्मनः
कान्ताय स्वसुताकथामकथयद्धर्माय शर्मात्मने ॥ १९ ॥
धर्मोऽपीति निशम्य रम्यचरितप्रीतो जगाद प्रिये !
स्त्रीत्वालीनमतिः सुता कृतवती स्थानेऽनुरागं तव ।
गण्यः पुण्यवतामयं धुरि धराऽनेनैव रत्नप्रसूः
श्लाघ्योऽसौ महतामयं गुणमयः श्रीवस्तुपालो यतः ॥ २० ॥
नास्ते सूर्यरथस्य चक्रमपरं तालध्वजस्याप्यहो
नान्यत्कुण्डलमस्ति हस्तिवदनस्याप्यस्ति नान्यो रदः ।
धर्मस्यापि न चापरोऽस्ति चरणः किं निर्मितं धिग्धाये-
त्यन्तः सीदति वर्णितः कविजनैरन्योपकारीति यः ॥ २१ ॥

श्रीशत्रुञ्जयरैवतादिषु महातीर्थेषु पुण्यात्मना
येनासूत्र्यत विस्तृतेन महसा श्रीसङ्घयात्रामहः ।
यत्राजायत चारुकूबरिचमूचीत्कारमन्त्राक्षरै-
रक्षुण्णः कलिकालकालभुजगत्रासाय पांशूत्करः ॥ २२ ॥
भूमीन्दुः सगरः प्रफुल्लतगरस्रग्दामरामप्रथः
श्रीरामोपि युधिष्ठिरोऽपि च शिलादित्यस्तथा जावडिः ।
मन्त्री वाग्भटदेव इत्यभिहिताः शत्रुञ्जयोद्धारिण-
स्तेषामश्चलतामियेष सुकृती यः सद्गुणालङ्कृतः ॥ २३ ॥
जीर्णानुद्धरता नवान् रचयता देवालयांस्तन्वता
येनानूपनिपानकूपसरसीसत्रप्रपा भूरिशः ।
भूपीठे परिभूय दुर्युगकलामुल्लासितं मन्मह-
स्तस्मै सम्प्रति पारितोषिकमहं दास्ये सुतां सद्गतिम् ॥ २४ ॥
किञ्चैतत्प्रतिरूपदर्शनवशादस्मानिमां कर्हिचित्
याचेतैष विशेषतस्तदुचितं पुत्रीपितॄणां तु नः ।
इत्यालोच्य तया समं दयितया धर्मेण धीमन्नहं
त्वत्पार्श्वे प्रहितास्मि तत्प्रतिकृतिं चैतां भवानीक्षताम् ॥ २५ ॥
संदिष्टं भवतश्च किञ्चन तया यस्त्वं मयासि श्रुतः
कीर्त्तेस्तां च भवानवाकिरदहो निर्धौतदोषामपि ।
कामो हन्ति जनं त्वदेकशरणं त्वं कामहन्ता च नो
यद्येतद्द्वितयं तथापि हि मम त्वय्येव लीनं मनः ॥ २६ ॥
श्रुत्वेत्थं सकलं कलङ्कविकलप्रज्ञालतामण्डितो
मन्त्री पल्लवितः प्ररूढपुलकैः पुन्नागशाखीव सः ।
तत्सन्देशगिरा कुटीकुटिलयाकृष्टं जरायोषया
विश्रान्तं सुमनोभरं प्रतिकृतावातेनिवान् सद्गतेः ॥ २७ ॥
दर्शन्दर्शमिमामनन्यललनारूपां तदीयस्पृहा-
सञ्जातज्वरडम्बरः परमयं राज्येऽपि वैराग्यवान् ।
शय्यायां क्षणतः क्षणादुपवने क्रीडासरस्यां क्षणा-
च्छिल्पपर्षदिव क्षणादुपविशन्भेजे रतिं न क्वचित् ॥ २८ ॥
पात्रेभ्यः स्वयमेव दक्षिणकरेणादत्त लक्ष्मीमियं
संवर्द्धेत विवर्द्धतां स्थितिरियं तत्रास्ति चित्रं न मे ।

एतत्किं पुनरात्मनैव सुजनैराच्छिद्यमानोऽप्यसौ
मन्त्रीशस्य भृशायते स्म निभृतं देहेऽस्य दाहज्वरः ॥ २९ ॥
श्रीखण्डद्रवसेवनैरलमलं केलीदलोद्वीजनैः
पुष्पस्रस्तरकैरलं पुटकिनीपत्राञ्छनैरप्यलम् ।
शैत्यं सद्गतिसङ्गमामृतमृते मे कल्पते नापरै-
रित्याह ज्वरदाहयुक्परिजनं श्रीवस्तुपालोऽन्वहम् ॥ ३० ॥
झम्पां कुन्तशते सृजामि निशिते वार्द्धेरगाधे जले
वा मज्जामि विशामि भीषणरुचावह्नाय वह्नावथ ।
कुर्वे भैरवपातमुग्रमथवा तन्वे तपः साम्प्रतं
याच्ञादैन्यमृते यदि क्वचिदपि प्राप्येत धर्मात्मजा ॥ ३१ ॥
धर्मो दास्यति याचितां निजसुतां त्वामेष मह्यं प्रिये
याच्ञामुग्धमना जनः पुनरयं तस्मिन्नपि स्वामिनि ।
त्वं प्राणानमरीति मामपि विना धर्तुं क्षमा त्वामृते
मन्येऽहं तु न हन्त चक्रमिथुनादप्यावयोर्धिग्दशाम् ॥ ३२ ॥
रोगातङ्कतया तया बहुविधं तल्पे रटन्तो न के
नीयन्ते यमकिङ्करैः परिजनादाकृष्य वध्याजवत् ।
दिष्ट्याहं त्वधिरुह्य सम्भृतजये शत्रुञ्जये जीवितं
मोक्ता सम्प्रति सद्गते तवकृते दाहज्वराद्गत्वरम् ॥ ३३ ॥
इत्यूहं सचिवेश्वरस्य कलयन्धर्मान्तिकं यातवा-
नायुर्बन्ध इति श्रुतो घटयितुं तत्कार्यमस्यानुगः ।
भक्तः शक्तिपरः कृती परहितस्रष्टातिसृष्टार्थता-
पात्रं भृत्यजनोऽस्ति यस्य हि स किं क्वापीप्सिते सीदति ॥ ३४ ॥
आयुर्बन्धविशिष्टताप्रमुदितः श्रीवस्तुपालं तथा
नेतुं सद्गतिपाणिपीडनकृते निर्णीय लग्नादिकम् ।
सद्बोधं प्रजिघाय मर्त्यभवने धर्मः स्वदौवारिकं
सोऽप्यभ्येत्य जगौ सगौरवमसुं वैर्यासनस्थोऽन्तिके ॥ ३५ ॥
जाताः के न भवन्ति के न भुवने के नो भविष्यन्ति च
श्रीमन्त्रीश्वर ! तावकस्तु महिमा न क्वापि संदृश्यते ।
यस्मात्त्विश्वशुभः प्रदातुमचिराद् धर्मः सुतां सद्गतिं
श्रीशत्रुञ्जयशैलमौलिवलये त्वामाह्वयत्यञ्जसा ॥ ३६ ॥

वर्षे हर्षनिषण्णषण्णवतिके श्रीविक्रमोर्वीभृत:
कालाद्द्वादशसंख्यहायनशतात् मासेऽत्र माघाह्वये ।
पञ्चम्यां च तिथौ दिनादिसमये वारे च भानोस्तवो-
द्वोढुं सङ्गतिमस्ति लग्नमसमं तत्त्वर्यतां त्वर्यताम् ॥ ३७ ॥
सद्बोधादधिगम्य सर्वमिति तत्पीयूषवार्द्धोपमं
सन्तापोर्जितिवर्जितो गिरिरिव प्रोल्लासिरोमाङ्कुर: ।
मन्त्री जैत्रगुणं निजाङ्गजमथ श्रीजैत्रसिंहं समा-
हूयास्मै नतमौलयेऽवनिधुरामारोप्य शिक्षां ददौ ॥ ३८ ॥
वत्स स्वच्छगुणप्रवीण! भवते शिक्षावच:ख्यापनं
यत्किञ्चिज्जनिकर्तृभावविवशैरस्माभिरातन्यते ।
माधुर्यङ्करणं तदिक्षुशकले शङ्खे च शौक्ल्यार्पणं
पावित्र्यप्रथनं बताङ्ग ! पयसि स्वर्णे च वर्णक्रिया ॥ ३९ ॥
आधार: सुतरामत: परमसि त्वं वत्स! राज्यश्रियां
नाधारस्तु तवास्ति कोऽपि दधतो धात्रीं यथा पोत्रिण: ।
आत्मासौ भवतात्मनैव तदहो तेनैव विश्वत्रयी-
सङ्गीताद्भुतशक्तिवैभवभृता धीरेण धार्योऽन्वहम् ॥ ४० ॥
किञ्चास्माभिरभिज्ञ! सङ्गतिकरग्राहाय धर्माज्ञया
सद्बोधेन निमन्त्रिते नगपतौ शत्रुञ्जये गम्यते ।
त्वन्मातुस्त्विदमप्रियं हि ललितादेव्यास्तदेषास्त्विह
त्वं चास्या: पदपद्मषट्पदतया साकं धुरं धारय ॥ ४१ ॥
दिग्भर्तारमितोपि कीर्त्तिसुधया संशुक्लयेथास्तथा
सर्वत्रापि जनानुरागविभवैस्त्वं चित्रयेथा अपि ।
वंशाधारपरैश्च सद्गुणभरैश्चन्द्रोदयं ताडये-
र्वेश्मीया: पुरतोरणानिह सदारम्भोचितीमाचरे: ॥ ४२ ॥
देवान्दार्शनिनो द्विजानथ गुरून्देवाधिदेवानुरू-
कृत्यौचित्यविवेचनान्यहरहस्त्वं वत्स ! संपूजये: ।
सत्कुर्या: कविपुङ्गवेषु च सदा यस्मादमीभ्य: पर:
पूज्य: कोपि न कोपि नोपकरणोद्युक्त: सुहृत्कोपि न ॥ ४३ ॥
शिक्षायामिति कुड्मलीकृतकराम्भोजद्वयीमौलिना
जैत्रेणाश्रुविमिश्रनेत्रयुगलेनाङ्गीकृतायामथ ।

मन्त्री सत्कृतसद्गुसद्गुरुजनोऽनुज्ञाप्य भूमीपतिं
प्रस्थास्यन्रुदतीं जगाद सुदतीं स्वां धर्मपत्नीमिति ॥ ४४ ॥
राणूकुक्षिसरोवरैककमलिनि श्रीकृष्णदेवात्मजे
देवि च्छेकशिरोमणे ! न भवती कर्तुं खिदामर्हति ।
धर्मस्याग्रहतस्तदीयदुहितुः पाणिं ग्रहीष्यामहे
स्वातन्त्र्यं न तदत्र जैत्रसहिता त्वं तिष्ठ यामो वयम् ॥ ४५ ॥
इत्युक्ता दयितेन तेन निपतत्पीताश्रुणा चक्षुषा
पश्यन्ती स्वपदाङ्गुलीरभिदधे सापीति सामिस्मिता ।
स्वामिन्साधय कार्यमात्मनि हितं नात्रान्तरायीभवा-
म्यद्वैते हि सुखे प्रियस्य मुदिताधीनाः कुलीनाः स्त्रियः ॥ ४६ ॥
विज्ञाप्येति निगूढमन्यु ललितादेव्या विसृष्टोऽनुगा-
नापृच्छ्याश्रुपरान्पुरीपरिसरे पौरान्समस्ताननु ।
राज्योद्धारनयप्रचारविधये मन्त्रीश्वरः शिक्षयं-
स्तेजःपालमसावदःसमलसत्थानस्थितः प्रस्थितः ॥ ४७ ॥
नीरन्ध्रं मिलितप्रभूतजनतादृक्पातकान्तिच्छटा-
रङ्गज्जङ्गमरत्नतोरणपरिस्पन्दैरमन्दोत्सवः ।
तद्वाञ्छाधिकमर्थिषु प्रवितरन्सारं वसन्तस्ततः
प्राप स्वनगरोपशल्यमचिरादेवादितीर्थाचलम् ॥ ४८ ॥
अभ्यारोहदितश्च मन्त्रिमुकुटस्तत्तीर्थपृथ्वीधरं
किञ्चेतश्च समन्वितः सुरगणैः स्वामाददानः सुताम् ।
श्रीधर्मः सममप्सरोनुगतया सुस्निग्धया श्रद्धया
प्रापद्यत्र समस्ति तज्जनिकरः श्रीनाभिजन्मा जिनः ॥ ४९ ॥
उल्लोचैर्विजयस्फुरोर्जितमिव प्रोल्लासिभिस्तोरणैः
सभ्रूभङ्गमिवासिभासितमिव प्रेङ्खोलरम्भादलैः ।
दूरीकर्तुमधर्मविप्लवमिव श्रीधर्मदेवाज्ञया
तस्मिन्पर्वणि सर्वतः प्रगुणितं नाभेयचैत्यं व्यभात् ॥ ५० ॥
ध्यानस्नानविशुद्धमूर्तिरमलज्ञानांशुकालङ्कृत-
स्तत्रादौ प्रविशन्कृतार्थमहिमाकृष्टः स्वयं श्रद्धया ।
धर्मान्मन्त्रिवरोऽधिगम्य चतुरश्चत्वारि सन्मङ्गला-
न्यार्वत्यादिजिनेश्वरस्य पुरतश्चक्रे करे सङ्गतिम् ॥ ५१ ॥

मञ्चस्वस्तिकतोरणध्वजवतीं गंधोदकोपस्कृतां
 द्यामद्याभित एव देवभृतकाः कुर्वन्त्वहो सत्वरम् ।
यस्मादेष्यति वन्दितुं निजपितॄन् श्रीवस्तुपालः करे
 कुर्वन्सद्गतिमित्यघोषयदधिष्ठाता दिवो डिण्डिमैः ॥ ५२ ॥
मन्त्रीन्दुर्निजकीर्त्तिमम्बरसरित्तीरद्रुमालीतल-
 क्रीडत्किन्नरगीयमानविभवां शृण्वन्समन्तादपि ।
धर्मेणाथ पुरस्कृतः शतमखेनाभ्येत्य सप्रीतिकं
 सद्गत्या सममुत्सवेन महता प्रावेश्यत स्वःपुरीम् ॥ ५३ ॥
धर्मेण प्रतिपादितेन्द्रनगरद्वैराज्यलक्ष्मीपुषा
 तेनामात्यपुरन्दरेण पितरो देवाश्च देवर्षयः ।
नित्योद्धारकृताधमर्णपदवीमारोप्य धन्यात्मने
 जैत्रायात्मभुवेऽनुवेलमपि तामित्याशिषं दापिताः ॥ ५४ ॥
अस्तु स्वस्ति स्वगोत्रार्णवनवशशिने दुर्नयध्वान्तजृम्भा-
 विष्कम्भाय स्वभावप्रसृमरमहसे जैत्रसिंहाय तस्मै ।
येन क्षोणीधुरायां सह किरिकमठाहीश्वरैरुद्धृतायां
 निश्चिन्तोऽयं वसन्तः सुरपुरमसुरानुद्धुनानः पुनाति ॥ ५५ ॥

इति सिद्धसारस्वताचार्यश्रीबालचन्द्रविरचिते वसन्तविलासनामनि महाकाव्ये सद्गतिपाणिग्रहणो नाम चतुर्दशः सर्गः ।

तेजःपालवसन्तपालसचिवद्वन्द्वानुरागोल्लस-
 त्कौसुम्भे धर धिष्ण्यमौक्तिकभृतं स्थालं नभस्त्वं धरे ! ।
चन्द्र ! त्वं भव वन्दनं भव रवे ! त्वं दीपिका त्वं दधि
 स्वर्गङ्गे भव जैत्रसिंहसुकृती येनाद्य वर्द्धाप्यते ॥ १ ॥
वाग्वल्लीदलदस्यवः कति न वा सन्त्याखुतुल्योपमाः
 सत्योल्लेखमुषः स्वकोष्ठपिठरीसम्पूर्त्तिधावद्धियः ।
सोऽन्यः कोऽपि विदर्भरीतिबलवान्बालेन्दुसूरिः पुरो
 यस्य स्वर्गिपुरोहितोऽपि न गिरां पौरोगवस्तादृशः ॥ २ ॥

अपराजितकवेः ।

समाप्तं वसन्तविलासकाव्यम् ।

# APPENDIX I.

# श्रीवस्तुपालप्रबन्धः

( राजशेखरसूरिकृतप्रबन्धकोशान्तर्गतः )

श्रीवस्तुपालतेजःपालौ मन्त्रीश्वरावुभा आस्ताम् ।
यौ भ्रातरौ प्रसिद्धौ कीर्त्तनसङ्ख्यां तयोर्ब्रूमः ।

पूर्वं गूर्जरधरित्रीमण्डनायां मण्डलीमहानगर्यां श्रीवस्तुपालतेजःपालाद्या वसन्ति स्म । अन्यदा श्रीमत्पत्तनवास्तव्यप्राग्वाटान्वयठक्कुरश्रीचण्डप्रसादाङ्गजमन्त्रिश्रीसोमकुलावतंसठक्कुरश्रीआसराजनन्दनौ श्रीकुमारदेवीकुक्षिसरोवरराजहंसौ श्रीवस्तुपालतेजःपालौ शत्रुञ्जयगिरिनारादितीर्थयात्रायां प्रस्थितौ । हडालाग्रामं गत्वा स्वां भूतिं चिन्तयतस्तावल्लक्षत्रयं सर्वस्वं जातम् । ततः सुराष्ट्रास्वस्वास्थ्यमाकलय्य लक्षमेकमवन्यां निधातुं निशीथे महीस्थलतलं खानयामासतुः । तयोः खानयतोः कस्याऽपि प्राक्तनः कनकपूर्णः शौल्कः कलशो निरगात् । अथ तमादाय श्रीवस्तुपालस्तेजःपालजायाऽनुपमदेवीं मान्यतयाऽपृच्छत् क्वैतन्निधीयते । तयोक्तं गिरिशिखरे एतदुच्चैः स्थाप्यते, यथा प्रस्तुतनिधिवन्नान्यसाद्भवति । तच्छ्रुत्वा श्रीवस्तुपालस्तद्द्रव्यं श्रीशत्रुञ्जयोज्जयन्तादावव्ययत् । कृतयात्रो व्यावृत्तः धवलकपुरमगात् । अत्रान्तरे महणदेवी नाम कन्यकुब्जेशसुता जनकात्प्रसन्नाद्गूर्जरधरां कञ्चुलिकापदे लब्ध्वा चिरं भुक्त्वा कालेन मृता, तस्यैव गूर्जरदेशस्याधिष्ठात्री महर्द्धिका व्यन्तरी जाता । सा धवलक्के शय्यायां सुखविश्रान्तं राणकं वीरधवलं प्रत्यक्षीभूय जगाद । राणक । इयं गूर्जरधरा वनराजप्रभृतिभिर्नरेन्द्रैः सप्तभिः चापोत्कटवंश्यैः षण्णवत्यधिकं शतं वर्षाणां भुक्ता । तदनु मूलराजचामुण्डराजवल्लभराजदुर्लभराजभीमकर्णजयसिंहदेवकुमारपालाजयपालदेवलघुभीमार्णोराजैश्चुलुक्यैः . सनाथीकृता । सम्प्रति युवां पितापुत्रौ लवणप्रसादवीरधवलौ स्तः । इयं गूर्जरधरा कालवशादन्यायपरैः पापैः स्वाम्यभावात् मत्स्यन्यायेन कदर्थ्यमानाऽऽस्ते म्लेच्छैरिव गौः। यदि युवां वस्तुपालतेजःपालौ मन्त्रिणौ कुर्वाथे तदा राज्ञः प्रतापधर्मवृद्धिर्भवति । अहं महणदेवी सर्वव्यापिभिः पुण्यैराकृष्टा वदन्त्यस्मि । इत्युक्त्वा विद्युदिव सहसाऽदृश्या बभूव ।

राणकवीरधवलः पद्मासनस्थः शय्योपविष्टश्चिन्तयति। अहो देव्युपदेशः! । साक्षात्कर्त्तव्यमेतत् तन्मन्त्रिद्वयं यद्देव्योक्तम् । यतः—

दृप्यद्भुजाः क्षितिभुजः श्रियमर्जयन्ति
नीत्या समुन्नयति मन्त्रिजनः पुनस्ताम् ।
रत्नावलीं जलधयो जनयन्ति किन्तु
संस्कारमत्र मणिकारगणः करोति ॥ २ ॥

इत्यादि चिन्तयन्प्रातरुत्थितः । पूर्वोक्तमेवोपदेशं महणदेवी लवणप्रासादायाप्यदत्त । कृतप्रातःकृत्यौ मिलितौ पितापुत्रौ। कथितं रात्रिवृत्तम् । अन्योन्यं तुष्टौ द्वावपि । सदैव च तेषां कुलगुरुः पुरुषसरस्वती सोमेश्वरदेवो द्विजः स्वस्त्ययनायागात् । ज्ञापितोऽसौ वृत्तान्तस्ताभ्याम् । सोऽप्युवाच, देवौ युवयोः प्राचीनपुण्यप्रेरिता देवता अपि साक्षात्तस्मात्तदुक्तमेवाचरतः। मन्त्रिबलं विना न किञ्चिद्राज्यपरिकर्म्मणम् । मन्त्रिणौ च यौ भवतोरग्रे प्रतिपादितौ तावत्रागतौ स्तः । मम मिलितौ राजसेवार्थिनौ द्वासप्ततिकलाविदुरौ न्यायनिष्ठौ जैनधर्मस्थौ स्तः । यद्यादेशः स्यात्तदाऽऽनीयेते। राणकादेशात्पुरोहितेन हि तेन सद्य आनीतौ नमस्कारितौ आसनादिप्रतिपत्त्या गौरवितौ । उक्तौ च श्रीलवणप्रसादवीरधवलेन स्वयम्–

आकृतिर्गुणसमृद्धिशंसिनी नम्रता कुलविशुद्धिसूचिका ।
वाक्क्रमः कथितशास्त्रसङ्क्रमः संयमश्च युवयोर्वयोऽधिकः ॥ ३ ॥
श्लाघ्यतां कुलमुपैति पैतृकं स्यान्मनोरथतरुः फलेग्रहिः ।
उन्नमन्ति यशसा सह श्रियः स्वामिनां च पुरुषैर्भवादृशैः ॥ ४ ॥
यौवनेऽपि मदनान्न विक्रिया नो धनेऽपि विनयव्यतिक्रमः ।
दुर्जनेऽपि न मनागनार्जवं केन वामिति नवाकृतिः कृता ॥ ५ ॥
आवयोस्तु पितृपुत्रयोर्महानाहितः क्षितिभरः पुरद्रुहा ।
तद्युवां सचिवपुङ्गवावहं योक्तुमत्र युगपत्समुत्सहे ॥ ६ ॥
येन केन च सुधर्मकर्मणा भूतलेऽत्र सुलभा विभूतयः ।
दुर्लभानि सुकृतानि तानि यैर्लभ्यते पुरुषरत्नमुत्तमम् ॥ ७ ॥

अथ वस्तुपालः प्राह—

देव ! सेवकजनः स गण्यते पुण्यवत्सु गुणवत्सु चाग्रणीः ।
यः प्रसन्नवदनाम्बुजन्मना स्वामिना मधुरमेवमुच्यते ॥ ८ ॥

---

1 Verses 3–7 occur in कीर्तिकौमुदी canto III (verses 59–62 & 64)

नास्ति तीर्थमिह पार्थिवात्परं यन्मुखाम्बुजविलोकनादपि ।
नश्यति द्रुतमपायपातकं सम्पदेति च समीहिता सताम् ॥ ९ ॥
सप्रसादवदनस्य भूपतेर्यत्र यत्र विलसन्ति दृष्टयः ।
तत्र तत्र शुचिता कुलीनता दक्षता सुभगता च गच्छति ॥ १० ॥
किन्तु विज्ञपयिताऽस्मि किञ्चन स्वामिना तदवधार्यतां हृदा ।
न्यायनिष्ठुरतरा गिरः सतां श्रोतुमप्यधिकृतिस्तथैव यत् ॥ ११ ॥
सा गता शुभमयी जगत्रयी देव ! सम्प्रति युगं कलिः पुनः ।
सेवकेषु न कृतं कृतज्ञता नापि भूपतिषु यत्र दृश्यते ॥ १२ ॥
दृष्टिर्नष्टा भूपतीनां तमोभिस्ते लोभान्धान्साम्प्रतं कुर्वतेऽग्रे ।
तैर्नीयन्ते वर्त्मना तेन यत्र भ्रश्यन्त्याशु व्याकुलास्तेऽपि तेऽपि ॥१३॥
न सर्वथा कश्चन लोभवर्जितः करोति सेवामनुवासरं विभोः ।
तथापि कार्यः स तथा मनीषिभिः परत्र बाधा न यथाऽत्र वाच्यता॥१४॥
पुरस्कृत्य न्यायं खलु जनमनादृत्य सहजा-
नरीन्निर्जित्य श्रीपतिचरितमादृत्य च यदि ।
समुद्धर्तुं धात्रीमभिलषसि तत्सैव शिरसा
धृतो देवादेशः स्फुटमपरथा स्वस्ति भवते[1] ॥ १५ ॥

किञ्च सम्प्रत्यावां मण्डलीनगरात्सेवार्थिनौ वः समीपमागतौ स्तः सकुटुम्बौ । लक्षत्रयी द्रव्यस्य नो गृहेऽस्ति । यदा देवौ पिशुनवचने लगतः, तदा तावन्मात्रस्वापतेयसहितौ दिव्यं कारयित्वा आवां मोक्तव्याविति । अत्र काहलिकं मर्यादीकृत्य परिग्रहस्य धीरा देवयोश्च भवत्विति राणकाभ्यां धीरां दत्त्वा दापयित्वा प्रधानमुद्राविनिवेशस्तेजःपालस्य करे कृतः, स्तम्भतीर्थधवलक्कयोराधिपत्यं वस्तुपालस्य विनिवेशितम् । एवं श्रीकरणमुद्रायां लब्धायामन्यैव तयोः स्फूर्तिरुदलासीत् । देवतासान्निध्यात्सहजबुद्धिबलाच्च स्वगृहमायातो वस्तुपालः श्रीजिनराजं पूजयामास । अथ तत्त्वं क्षणमचिन्तयत्—

उच्चैर्गर्वं समारोप्य नरं श्रीराशुनश्यति ।
दैन्यदत्तावलम्बोऽथ स तस्मादवरोहति ॥ १६ ॥
अन्धा एव धनान्धाः स्युरिति सत्यं तथापि ये ।
अन्योक्तेनाध्वना गच्छन्त्यन्यहस्तावलम्बिनः ॥ १७ ॥
धनी धनव्यये जाते दूरदुःखेन दूयते ।

1 Verses 8–15 occur in कीर्तिकौमुदी canto III between 67–77.

दीपहस्तः प्रदीपेऽस्ते तमसा बाध्यतेऽधिकम् ॥ १८ ॥
छत्रच्छायाच्छलेनामी धात्रीचक्रे निवेशिताः ।
भ्रमन्तोऽपि स्वमात्मानं मन्यन्ते स्थिरमीश्वराः ॥ १९ ॥
कालेन सौनिकेनेव नीयमानो जनः पशुः ।
क्षिपत्येव धिगासन्ने मुखं विषयशाद्वले ॥ २० ॥
कायः कर्मकरो यत्तत्रात्र कार्यातिलालना ।
भृतिमात्रोचितोह्येष प्रपुष्टो विचिकीर्षति ॥ २१ ॥
प्रयोजकान्यकार्येषु नश्यन्त्याशु महापदि ।
दुर्मित्राणीव स्वान्येषु बन्धुबुद्धिरधीमताम् ॥ २२ ॥
विषयाविषमुत्सृज्य दण्डमादाय ये स्थिताः ।
संसारसारमेयोऽसौ बिभ्यत्तेभ्यः पलायते ॥ २३ ॥
दुःखाग्निर्वा स्मराग्निर्वा क्रोधाग्निर्वा हृदि ज्वलन् ।
न हन्त शान्तिमायाति देहिनांमविवेकिनाम् ॥ २४ ॥
विधौ विध्यति सक्रोधे वर्म धर्मः शरीरिणाम् ।
स एव केवलं तस्मादस्माकं जायतां गतिः[1] ॥ २५ ॥

इत्यादि ध्यात्वा वस्त्राणि परावृत्य श्रीवस्तुपालः सपरिजनो बुभुजे। गृहीतताम्बूलो राजगृहमगमत्। एवं दिनसप्तके गते प्रथमं तद्राज्यजीर्णाधिकारी एकविंशतिलक्षाणि बृहद्द्रम्माणां दण्डितः, पूर्वमविनीतोऽभूद्विनयं ग्राहितः। तैर्द्रव्यैः कियदपि हयपत्तिलक्षेण सारं सैन्यं कृतं तेजःपालेन। पश्चात्सैन्यबलेन धवलक्कप्रतिबद्धग्रामपञ्चशतीग्रामण्यश्चिरसञ्चितं धनं हक्कयैव दण्डिताः, जीर्णव्यापारिणो निश्च्योतिताः। एवं मिलितं प्रभूतं स्वम्। ततः सबलसैन्यपरिग्रहपटुतेजसं श्रीवीरधवलं सहैवादाय सर्वत्र देशमध्येऽभ्रमन्मन्त्री, अदण्डयत्सर्वम्। ततोऽद्भुतर्द्धिवीरधवलस्तेजःपालेन जगदे! देव। सुराष्ट्राराष्ट्रे धनिनष्ठक्कुरास्ते दण्ड्यन्ते। ततोऽचलदयम्। लब्धास्वादः पुमान्यत्र तत्र सक्तिं न मुञ्चति।

अथ वर्द्धमानपुरगोहिलवाड्यादिप्रभून्दण्डयन्तौ प्रभुमन्त्रिणौ वामनस्थलीमागतौ। तटे चतुष्ककान्दत्त्वा स्थितो वीरधवलः। वामनस्थल्यां तदानीं यौ प्रभू सहोदरौ तौ साङ्गणचामुण्डनामानौ उद्दामस्थामानौ राणकश्रीवीरधवलस्य शालकौ। तदानीं सौजन्यमर्यादां परिपालयन् तद्भगिनीं निजजायां जयतलदेवीं मध्ये प्राहैषीद्बहुपरिजनाम्। सा गत्वा सहोदरौ समभाषिष्ट भ्रातरौ!

---

1 Verses 16–24 occur in कीर्तिकौमुदी canto VIII

भवतां भगिनीपतिरदण्डदण्डनोऽभङ्गभञ्जनः, गूर्जरधरां प्रतिग्रामं प्रतिपुरं दण्डयन्भवतोर्दण्डनायागतोऽस्ति, दीयतां घनाश्वादिसारम् । एतद्भगिनीवचः श्रुत्वा मदाध्मातौ तौ प्रोचतुः । मन्ये स्वसस्त्वमतः समायाता सन्ध्यर्थं, माऽस्मद्रान्धवयोः समरारूढयोरहं निर्धवाऽभूवम् । मास्म चिन्तां कृथाः । अमुं त्वत्पतिं हत्वा ते चारु गृहान्तरं कारयिष्यावः । न च निषिद्धोऽसौ विधिः, राजपुत्रकुलेषु दृश्यमानत्वात् । ततो जयतलदेव्याह समानोदर्यौ नाहं पतिवधभीता वां समीपमागां, किन्तु निःपितृकगृहत्वभीता । स हि नास्ति वां मध्ये यस्तं जगदेकवीरं ऊपरवटाख्यहयारूढं नाराचान्क्षिपन्तं शल्यं वेल्लयन्तं खड्गं खेलयन्तं द्रष्टुमीशिष्यते । कालः साक्षादरीणां सः । अदृष्टपरशक्तिः सर्वोऽपि भवति बलवान् । इत्येवं वदन्त्येव ततो निर्गत्य सा सती पतिसविधं गत्वा तां वार्त्तामुच्चैरकथयत् । तन्निशम्य वीरधवलो महाक्रोधकरालाक्षो भृकुटीभङ्गभीषणभालोऽनुकृतभीमसेनः सङ्ग्रामममण्डयत् । तावपि वीरातिवीरौ ससैन्यावागतौ । सङ्घटितो रणः पतितानि योधसहस्राणि, पक्षद्वयेऽपि रजसाच्छादितं गगनम् । गतस्वपरविभागे वीरधवलो हत इति सैन्यद्वये व्याचक्रे । क्षणार्द्धेन वीरधवलो दिव्याश्वाधिरूढः सारभट्टयुक् साङ्गणचामुण्डराजयोर्मेलापके गत्वा प्रसृतः, ऊचे च रे सौराष्ट्रौ ! गृहीतं करे शस्त्रं यद्यस्ति तेजः । इत्युक्त्वा तच्चक्रे यद्देवैर्दिवि शिरोधूनितं कुर्वद्भिर्ददृशे । हतौ साङ्गणचामुण्डसजौ, शोधितं रणक्षेत्रम् । पालिताः स्वे परे पालनार्हाः । प्रविष्टो वीरधवलो वामनस्थलीमध्यम् । गृहीतं शालकयोः कोटिसङ्ख्यं पूर्वजशतसञ्चितं कनकं, चतुर्दशशतानि दिव्यतुरङ्गमाणां पञ्चसहस्राणि तेजस्वितुरङ्गमाणां अन्यदपि मणिमुक्ताफलादि । 'जितं जितमिति' उद्घोषः समुच्छलितः । स्थितस्तत्र मासमेकम् । ततो वाजोमानगजेन्द्रचूडासमावालाकादिस्वामिनः प्रत्येकं गृहीतघनाः कृताः । द्वीपवेदपत्तनेषु प्रत्येकं बभ्राम । धनमकृशं मिलितम् । एवं सौराष्ट्रजयं कृत्वा समन्त्री राणो धवलक्ककं प्राविक्षत् । उत्सवा उत्सवोपरि परिपुस्फुरुः । तत्र प्रस्तावे चारणेन दोधकपादद्वयमपाठि—

" जीतउं छहिं जणेहिं सांभलि समहरि वाजियइ । "

एतावदेव पुनः पुनरपाठीत् नोत्तरार्द्धम् । गतश्चारणः स्वस्थानम् । तत्र राजवंश्याः षण्णां जनानां मध्ये आत्मीयं नाम न्यासयितुं रात्रौ तस्मै लंचामदुः । सोऽपि सर्वमग्रहीत् । एवं ग्राहं ग्राहं परितापिते, एकदा प्रातः सभायां बहुजनाकीर्णायां राणाग्रे उत्तरार्द्धमप्यपाठीत्—

" विहुं भुजि वीरतणेहिं चिहुं पगि ऊपरवटतणे " ॥ २६ ॥

सर्वेऽपि चमत्कृता राजन्यकाः । अहो प्रपञ्चेनानेनास्मान्वञ्चयित्वा निर्यासे तत्त्वमेवोक्तम् । पुनः सविशेषं ददुः ।

तदा भद्रेश्वरे वेलाकूले भीमसेनो नाम प्रतीहारः । स आत्मबली कस्याप्याज्ञां न मनुते धनी च । तस्मै वीरधवलो राजाऽऽदेशमदीदपत् , सेवको भव । " यद्दीयते तल्लभ्यते " इति न्यायः । वीरधवलस्तद्विग्रहाय गूर्जरधराराजपुत्रानमेलयत् सबहुसैन्यम् । भीमसेनो बलेन प्रबलः । उभयपक्षेऽपि बलवत्ता ।

अत्रान्तरे जाबालिपुरे चाहमानकुलतिलकः श्रीअश्वराजशाखीयः केतूपुत्रसमरसिंहनन्दनः श्रीउदयसिंहनामा राजकुलो राज्यं भुनक्ति । तस्य दायादास्त्रयः सहोदराः सामन्तपालानन्तपालत्रिलोकसिंहनामानो दातारः शूरास्तद्दत्तग्रामेन न तृप्तिमादधते । धवलक्कमागत्य श्रीवीरधवलं द्वाःस्थेनावाभणन् । देव वयममुकवंश्यास्त्रयः क्षत्रियाः सेवार्थिनः आगताः स्मः, यद्यादेशः स्यात्तदा आगच्छामः । राणकेनाहूतास्ते तेजआकृतिश्रमादिभिः शोभना रुचिताः । ते तस्य परस्परं पृष्टाः को ग्रासो वः कल्पते । ते प्रोचुः । देव ! प्रतिपुरुषं लूणसापुरीयद्रम्माणां लक्षं लक्षं ग्रासः । राणकेनोक्तमियता धनेन शतानि भटानां सङ्गृच्छन्ते, किमधिकं यूयं करिष्यथ । न दास्यामीयदिति ते बीटकदानपूर्वं विसृष्टाः । तदा मन्त्रिभ्यां विज्ञप्तं स्वामिन्नेते विमुच्यन्ते, पुरुषसङ्ग्रहाद्धनं न बहु मन्तव्यम् ।

वाजिवारणलोहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ २७ ॥

एवं विज्ञप्तमपि राणकेनावधीरितमुक्ता एव ते गताः प्रतिभटभटं श्रीभीमसेनप्रतीहारम् । भेटितः सः । उक्तो वीरधवलकृतकार्पण्यव्यवहारः । तुष्टो भीमसिंहः । कृतं तदिष्टवृत्तित्रैगुण्यम् । तैश्चोक्तं देव ! शीघ्रमेव कथापय वीरधवलायास्माद्बलेन यथा—यदि क्षत्रियोऽसि तदा शीघ्रं युद्धायायतेः, अन्यथाऽस्मदीयो भूत्वा जीवेः । प्रेषितो भीमसिंहेन भट्टः । उक्तः समेत्य वीरधवलः । ततो वीरधवलः ससैन्यश्चलितः । भट्टं पुनः प्राहैषीत् । पञ्चग्रामग्रामे युद्धमावयोः, तत्र क्षेत्रं कारयन्नस्मि, शीघ्रमागच्छेरित्याख्यापयत् । सोऽपि तत्र ग्रामे समेतः सबलः । सङ्घट्टितं सैन्यद्वयम् । वर्तन्ते सिंहनादाः, नृत्यन्ति पात्राणि, दीप्यन्ते धनानि । त्रिदिनान्ते युद्धं प्रतिष्ठितमुत्कण्ठिता योधाः । नेदीयानिद्धबाहूनामाहवो हि महामहः । सङ्ग्रामदिनादर्वाक् मन्त्रिवस्तुपालतेजःपालाभ्यां विज्ञप्तः

स्वामी। देव! त्रयो मारवाः सुभटाः त्वया न सङ्गृहीताः। ते परबले मिलिताः। तद्बलेन भीमसिंहो निर्भीर्गर्जति। अवधार्य चरैरपि निवेदितमेव तथौ। राणकेनोक्तं यदस्ति तदस्तु किं भयम्।

जयो वा मृत्युर्वा युधि भुजभृतां कः परिभवः।

मन्त्रिणा ज्यायसा उक्तं स्वामिन्! कार्मुककरे देवे के परे पुरोलक्षा अपि।

कोलः केलिमलङ्करोतु करिणः क्रीडन्तु कान्तासखाः
कासारेषु च कासराः सरभसं गर्जन्त्विह स्वेच्छया।
अभ्यस्यन्तु भयोज्झिताश्च हरिणा भूयोऽपि झम्पागतिं
कान्तारान्तरसञ्चरव्यसनवान्यावद्धि कण्ठीरवः॥ २८॥

कण्ठीरवे तु दृष्टे कुण्ठाः सर्वे वन्याः। अन्यच्च प्रभो! अस्मदीयसैन्ये डोडीयावंशीयो जेहुलः, चौलुक्यः सोमवर्मा, गुलकुल्यः क्षेत्रवर्माऽस्ति। देवस्तु किं वर्ण्यते कालार्जुनः। एवं वार्त्तासु वर्त्तमानासु द्वाःस्थः पत्ये व्यजिज्ञपत्। देव पुरुषो द्वारि वारितोऽस्ति, कस्तस्यादेशः। भ्रूसंज्ञया राणकस्तममोचयत्। मध्यमागत्य स उवाच। देव! सामन्तपालानन्तपालत्रिलोकसिंहैस्त्वत्त्यक्तैर्भीमसिंहमाश्रितैः कथापितमास्ते। देव! त्रिभिर्लक्षैर्ये भटास्त्वया स्थापिता भवन्ति तैरात्मानं रक्षेः। प्रातः कुमार्यां आरेण्यां प्रथमं त्वामेव एष्यामः। इति श्रुत्वा हृष्टेण राणकेन ससत्कारं स प्रैषि कथापितं च। एते वयमागता एव, प्रातर्भवद्भिरपि ढौक्यम्। सर्वेषामपि तत्रैव ज्ञास्यते भुजसौष्ठवम्। गतस्तत्र सः। प्रातर्मिलितं सैन्यद्वयं, वादितानि रणतूर्याणि। अङ्गेषु भटानां वर्माणि न ममुः। दत्तानि दानानि। तैस्तु त्रिभिर्मारवैरात्मीयं वर्षलभ्यं लक्षत्रयं भीमसिंहात्सद्यो लात्वाऽर्थिभ्यो ददे। स्वयमश्वेष्वारूढाः। प्रवर्त्तन्ते प्रहाराः। उपस्थितमान्ध्यं शस्त्रैः, पतन्ति शराः कृतान्तदूताभाः। आरूढं प्रहरमात्रमहः। सावधानो वीरधवलः। दत्तावधाना मन्त्र्यादयो रक्षकाः। अत्रान्तरे आगतास्ते मरुवीराः। भाषितः स्वमुखेन वीरधवलः। अयं देव इमे वयम्। सावधानीभूय रक्षात्मानम्। त्वद्योधा अपि त्वां रक्षन्तु। वीरधवलेनाप्युक्तं किमत्र विकत्थध्वे। क्रियैव दोःस्थाम प्रकाश्यताम्। एवमुक्तिप्रत्युक्तौ लग्नं युद्धम्। तत्रापरेष्वपि तटस्थेषु रक्षत्सु तैर्भल्लत्रयं धीरवीरधवलभाले लगितम्। एवं त्वां हन्मः, परमेकं तव बीटकं तदा भक्षितमस्माभिः, इति वदद्भिस्तैर्वीरधवलस्य तटस्थाः प्रहरणैः पातिताः। तेऽपि त्रयो मारवा व्रणशतजर्जराङ्गाः सञ्जाताः। राणवीरधवल ऊपरवटाश्वात्पातितः। ऊपरवटस्तैर्मारवैः स्वोत्तारके बन्धितः प्रच्छन्नः। रजसान्धं जगत-

दा । राणश्रीवीरधवलो भुवि पातितो भटैरुत्पाट्य लले। तावता पतिता सन्ध्या। निवृत्तं सैन्यद्वयम्। रात्रौ सर्वेऽपि भीमसेनीया वदन्ति। अस्माभिर्वीरधवलः पातितः। ततो मारवैरभिहितं युष्माभिः पातित इति किमभिज्ञानम्। तैरुक्तं किं भवद्भिः पातितः। मारवैरभिदधेऽस्माभिरेव पातितः। ऊपरवटो वदिष्यति। उत्तारकादानीय ऊपरवटो दर्शितः। तुष्टो भीमसिंहः उक्तवान् शुद्धराजपुत्रेभ्यो दत्तं धनं शतधा फलति । इदमेव प्रमाणम्। रिपुहयहरणं क्षत्रियाणां महान् शृंगारः। एवं वार्त्ताः कुर्वतां भटानां रात्रिर्गता। प्रातर्वीरधवलो व्रणजर्जरोऽपि पट्टभूयाक्षैर्दीव्यति । भीमसेनहेरिकैर्गत्वा तत् ज्ञात्वा तत्रोक्तं वीरधवलः कुशली गर्जति। यज्जानीत तत्कुरुत,। भीमसेनाय तन्मन्त्रिभिर्विज्ञप्तं देव! अयं बद्धमूलो देशेशः। अनेन विरोधो दुरायतिः। तस्मात्सन्धिः श्रेष्ठः। भीमसेनेनमतं तद्वचनं, परं सङ्ग्रामडम्बरः कृतः। अन्योन्यमपि यावदर्दितौ द्वौतावद्भट्टैर्मेलः कृतः। ऊपवराटाश्वो राणाय दापितः। भीमसिंहेन भद्रेश्वरमात्रेण धृतिर्धरणीया, विरुदानि न पाठनीयानि इति व्यवस्था आसीत्। एवं कृत्वा श्रीवीरधवलो दानं तन्वन् धवलक्ककमागात्। शनैः प्राप्तमर्मप्राणो भीमसिंहमपराध्यन्तं मूलादुच्छेद्य एकवीरां धरित्रीमकरोत् । धवलक्के राज्यं कुर्वतस्तस्य क्षुभितैः प्रभूतैः परराष्ट्रनृपतिभिः स्वं स्वं दत्तम्। तेन स्वेन सैन्यमेव मेलितम्। चतुर्दशशतानि महाकुलानि राजवंश्यानां राजपुत्राणां मेलितानि। तानि समभोजनवसनभोगवाहनानि तेजःपालस्य शरीरस्थच्छायावत् सहचारीणि समजीवितमरणत्वेन स्थितानि। तद्बलेन सैन्यबलेन च स्वभुजबलेन च सर्वं जीयते।

इतश्च महीतटाख्यदेशे गोध्रा नाम नगरं यत्र तत्तत्कार्येषु सङ्ग्रामे मृतानां राजपुत्राणामेकोत्तरशतसङ्ख्यानि स्वयंभूलिङ्गानि उदभूवन्। तत्र घूघुलो नाम मण्डलीकः। स गूर्जरधरां समागन्तुकामान् सार्थान्गृह्णाति। राणश्रीवीरधवलस्याज्ञां न मन्यते। तस्मै मन्त्रिभ्यां वस्तुपालतेजःपालाभ्यां भट्टः प्रेषितः। अस्मत्प्रभोराज्ञां मन्यस्व, अन्यथा साङ्गणचामुण्डादीनां मध्ये मिल इति कथापितम्। तच्छ्रवणात्क्रुद्धेन तेनैव भट्टेन सह स्वभट्टः प्रेषितः। तेनागत्य राणश्रीवीरधवलाय कज्जलगृहं शाटिका चेति द्वयं दत्तम्। उक्तं च ममान्तःपुरं सर्वो राजलोक इति नः प्रभुणा ख्यापितम्। राणेन स भट्टः सत्कृत्य प्रहितः। गतः स्वस्थानम्। राणेन भाषिताः सर्वे स्वसैन्यकाः घूघुलविग्रहाय को बीटकं गृहीष्यति? कोऽपि नाद्रियते। तदा तेजःपालेन गृहीतम्। चलितः प्रौढसैन्यपरिच्छदः। गतस्तद्दे-

शाद्र्वाक्भागे कियत्यामपि भुवि स्थित्वा सैन्यं कियदपि स्वल्पमग्रे प्रास्थापयत्। स्वयं महति मेलापके गुप्तस्तस्थौ। अल्पेन सैन्येनाग्रे गत्वा गोध्रागोकुलानि चालितानि। गोपालाः शरैस्ताडितास्तैरन्तर्गोध्रकं पूत्कृतं गावो ह्रियन्ते कैश्चित्। क्षात्रं धर्मं पुरस्कृत्य धावत इति शब्दंश्रुत्या घूघुलो विचिन्तयति नवीनमिदम् केनास्मत्पदमागत्य गावो ह्रियन्ते।

वृत्तिच्छेदविधौ द्विजातिमरणे स्वामिग्रहे गोग्रहे
सम्प्रासे शरणे कलत्रहरणे मित्रापदां वारणे।
आर्तत्राणपरायणैकमनसां येषां न शस्त्रग्रहः
तानालोक्य विलोकितुं मृगयते सूर्योऽपि सूर्यान्तरम् ॥ २९ ॥

इति वदन्नेव ससेनस्तुरङ्गममारूढः, जातोऽनुपदं गोहर्तॄणाम्। गोहर्तारोऽपि घूघुलाय दर्शनं ददिरे, शरान्संदधिरे, न च स्थित्वा युध्यन्ते। इत्येवं भेदयद्भिस्तैर्म्नावलीनो घूघुलः यावन्मन्त्रिणो महति वृन्दे पतितः। तेन ज्ञातमीदृशं छद्मेदं मन्त्रिणः। भवतु तावत् घूघुलोऽस्मि। निजाः सुभटाः समराय प्रेरिताः। स्वयमविशेषमभियोगं दधौ। ततो लग्नः संहर्तुम् मन्त्रिपृतनापि ढुढौके। चिरं रणरसरभसोऽभूद्। भग्नं घूघुलेन मन्त्रिकटकम्। कान्दिशीकं दिशो दिशि गच्छति। तदा मन्त्रितेजःपालेन स्थिरमश्वस्थितेन तटस्थाः ससकुलीनाः शुद्धराजपुत्रा भाषिताः। अरिस्तावद्बली, आत्मीयं तु भग्नं सकलं सैन्यम्। नष्टानामस्माकं का गतिः, किं यशः?। जीवितव्यमपि नास्त्येव। तस्मात्कुर्मः समुचितम्। तैरपि ससभिस्तद्वाचाऽभिमतम्। व्याघुटिता अष्टौ, घ्नन्ति नाराचादिभिः परसैन्यम्। तावन्मात्रं स्ववृन्दं सङ्घटितम्। दृष्ट्वा परेऽपि सत्त्वं धृत्वा चलिताः। तदा तेजःपाल एकत्र अम्बिकां देवीमपरत्र कपर्दियक्षं पश्यति। जयं निश्चित्य प्रसरं तावद्ययौ यावद्घूघुलः गत्वा भाषितः। मण्डलीक! येनास्मन्नाथाय कज्जलगृहादि प्रहीयते तद्भुजबलं दर्शय। घूघुलोऽपि प्रत्याह इदं भुजबलं पश्य इत्युक्त्वा निबिडं युयुधे। द्वन्द्वयुद्धं मन्त्रिमण्डलीकयोः। अथ मन्त्री सहसा दैवतबलाद्भुजबलाच्च तमश्वादपीपतत्, जीवन्तं बद्ध्वा काष्ठपञ्जरेऽचिक्षिपत्, स्वसैन्यान्तर्निनाय। स्वयं बहुपरिच्छदो गोध्रानगरं प्रविवेश। अष्टादश कोटीः हेम्नां कोशम्, अश्वसहस्राणि चत्वारि, मूटकं शुद्धमुक्ताफलानां, दिव्यास्त्राणि, दिव्यवसनानि, सर्वं जग्राह। घूघुलस्थाने आत्मीयं सेवकं न्यास्थत्। चलितो मन्त्री, गतो धवलक्कं, दर्शितो घूघुलः। वीरधवलेन तत्कज्जलगृहं तद्गले बद्धं, शाटिका वंठैः परिधापिता। तदा घूघुलः स्वदन्तैर्जिह्वां खण्डयित्वा मृतः।

जातं वर्द्धापनकं धवलक्कके। श्रीवीरधवलेन महत्यां सभायामाकार्य श्रीतेजः-पालः परिधापितः। प्रसादपदे भूरि भूरि ददे। कवीश्वरे सोमेश्वरे च दृक् सञ्चारिता। ततः सोमेश्वरदेवः प्राह—

मार्गे कर्दमसङ्कुले जलभृते गर्त्ताशतैराकुले
खिन्ने शाकटिके भरेऽतिविषमे दूरं गते रोषसि।
शब्देनैतदहं ब्रवीमि सततं कृत्वोच्छ्रितां तर्जनी-
मीदृक्षे विषमे विहाय धवलं वोढुं भरं कः क्षमः॥ ३०॥

विसृष्टा सभा। मिलितौ वस्तुपालतेजःपालावेकत्र। कृताः कथाश्चिरम्। तुष्टौ द्वौ मन्त्रयेते स्म। धर्मे एव धनमिदं दत्ते। धर्मे एव व्ययनीयम्। ततः सविशेषं तथैव कुरुतः। ततः कविना केनाप्युक्तम्—

पन्थानमेको न कदापि गच्छेदिति स्मृतिप्रोक्तमिव स्मरन्तौ।
तौ भ्रातरौ संसृतिमोहचौरे सम्भूय धर्माध्वनि सम्प्रवृत्तौ॥ ३१॥

अथ वस्तुपालः शुभे मुहूर्त्ते स्तम्भतीर्थं गतः। तत्र मिलितं चातुर्वर्ण्यं, दानेन तोषितं सर्वम्। तत्र सदीकनामा नौवित्तकः। स च सर्ववेलाकूलेषु प्रसरमाणविभवो बद्धमूलः अधिकारिणं नन्तुं नायाति, प्रत्युत तत्पार्श्वेऽधिकारिणा गन्तव्यम्। एवं बहुकालो गतः। पूर्वं मन्त्रीन्द्रस्तं भट्टेनोवाच अस्मान्नन्तुं किमिति नागच्छसि?। स वक्ति न नवेयं रीतिः, प्रागपि नागच्छामि; यत्तु स्यान्न्यूनं तव तत्पूरयामि स्थानस्थः। तच्छ्रुत्वा मन्त्री रुष्टः कथापयामास पुरुषो भूत्वा तिष्ठेः, शास्मि त्वां दुर्विनीतम्। ततस्तेन वडूआख्यवेलाकूलस्वामी राजपुत्रः पञ्चाशद्वंशमध्यस्थखादिरमुशलस्यच्छेदने खड्गेन प्रभुः, प्रभूतसैन्यत्वात्साहणसमुद्र इति ख्यातः शङ्खाख्य उत्थापितः। तेन भाणितं मन्त्रिगणे। मन्त्रिन्मदीयमेकं नौवित्तकं न सहसे, मदीयमित्रमसौ। तस्माद्वचनात्क्रुद्धो मन्त्री प्रत्यवीवचत्। श्मशानवासी भूतेभ्यो न बिभेति। त्वमेव प्रगुणो भूत्वा युधि तिष्ठेथाः। सन्नद्धः सः। मन्त्रिवस्तुपालोऽपि धवलक्काद्भूरिसैन्यमानाय्याभ्यषेणयत्। रणक्षेत्रेऽर्दितौ द्वौ। शङ्खेन निर्दलितं मन्त्रिसैन्यं पलायिष्ट दिशो दिशि। तदा वस्तुपालेन स्वराजपुत्रो माहेवकनामा भाषितः। इदमस्मन्मूलघट्टं वर्त्तते, तत्कुरु येन श्रीवीरधवलो न लज्जते। ततोऽसौ राजपुत्रः स्वैरेव कतिपयैर्मित्रराजपुत्रैः सह तमभिगम्योवाच। शङ्ख! नेयं वडूयाख्या ग्रामवाटिका, क्षत्रियाणां सङ्ग्रामोऽयम्।

---

1 This verse occurs in the Mt. Âbu Prasasti with some difference in readings.

शङ्खोऽप्याह सुष्ठु वक्तुं वेत्सि नायं तव प्रभोः पट्टकिलपरिपन्थनप्रदेशः, किन्तु सुभटस्य क्रीडाक्षेत्रमिदमित्येवं वादे जाते द्वन्द्वरणे माहिबकेन मन्त्रिणि पश्यति मन्त्रिप्रतापाच्छङ्खः पातितः । समरे जातो जयजयाकारः। मन्त्रिणा तद्राज्यं गृहीतम् । वेलाकूलश्रीणां का सङ्ख्या । ततः स्तम्भतीर्थमुत्तोरणमुत्पताकमविशत् । प्रविष्टः सदीकसदनम् । तस्य भटानां सप्त त्रिगुणशतानि सन्नद्धानि हत्वा सजीवग्राहं जग्राह, विद्रुवाणं तं कृमाणेन जघान। ततो गृहमामूलचूलं खातं पातितम्। हेमेष्टिकानां सङ्ख्या न, तथा मणिमुक्ताफलपदकानाम्। आयातो मन्त्री स्वधवलगृहम्, तोषितः स्वस्वामी वीरधवलः परिग्रहलोकश्च ।

ततः स्तुतिः—

श्रीवस्तुपाल ! प्रतिपक्षकाल ! त्वया प्रपेदे पुरुषोत्तमत्वम् ।
तीरेऽपि वार्द्धेरकृतेऽपि मात्स्ये रूपे पराजीयत येन शङ्खः ॥ ३२ ॥

तावल्लीलाकवलितसरित्तावदभ्रंलिहोर्मि-
स्तावत्तीव्रध्वनितमुखरस्तावदज्ञातसीमा ।
तावत्प्रेङ्खत्कमठमकरव्यूहबन्धुः स सिन्धुः
लोपामुद्रासहचरकरक्रोडवर्ती न यावत् ॥ ३३ ॥

ततश्चाक्षवाटिनौवित्तकवाट्योः पार्थक्यं कृतम् । आ महाराष्ट्रेभ्यः साधिता भूः । वेलाकूलीयनरेन्द्राणां नरेन्द्रान्तसङ्क्रम्यमाणानां मन्त्री प्रतिग्राहेण सान्निध्यं कृत्वा जयलक्ष्मीमर्पयतीति ते वोहित्थानि सारवस्तुपूर्णानि प्राभृते प्राहिण्वन्ति । अम्बिकाकपर्दिनौ रात्रौ निधानभुवं कथयतः । ते निधयो मन्त्रिणा खानंखानं गृह्यन्ते । दुर्भिक्षस्य नामापि नाभूत्, विड्वराणि दूरे नष्टानि, मुद्गलबलान्यागच्छन्ति जघ्निरे । कदा पुनर्नाययुः। पल्लीवने दुकूलानि नागोदराणि च बद्धानि, गृहीता कोपि न । ग्रामे ग्रामे सत्राणि, सत्रे सत्रे मिष्टान्नानि, ताम्बूलानि वैद्याः । दर्शनद्वेषो न । श्वेताम्बरेभ्यः प्रतिवर्षं तिस्रः तिस्रः स्वदेशसर्वनगरेषु प्रतिलाभनाः शेषदर्शनानामप्यर्चा । मन्त्रिवस्तुपालपत्न्यौ द्वे ललितादेसोषू कल्पवल्लीकामधेनू । ललितादेव्याः सुतो मन्त्रिजयन्तसिंहः, सूहवदे विजानिः । प्रत्यक्षचिन्तामणिः तेजःपालदयिताऽनुपमा । एवं पठितं च कविना—

लक्ष्मीश्चला शिवा चण्डी शची सापत्न्यदूषिता ।
गङ्गा न्यग्गामिनी वाणी वाक्साराऽनुपमा ततः ॥ ३३ ॥

श्रीशत्रुञ्जयादिषु नन्दीश्वरेन्द्रमण्डपप्रभृतिकर्मस्थायाः प्रारंभिषत । आरासणादिदलिकानि स्थलपथेन जलपथेन च तत्र प्राप्यन्ते । तपस्सुत्थापनानां च प्रकाशः।

एकदा तौ भ्रातरौ द्वावपि मन्त्रिपुरन्दरौ महर्द्धिसङ्घोपेतौ श्रीपार्श्वनाथं नन्तुं स्तम्भनकपुरमीयतुः । प्रथमदिने ससङ्घौ तौ पार्श्वनाथस्य पुरो भावभासुरौ श्रावकश्रेणिपुरःसरौ स्थितौ । गीतरासादि वर्तते । सङ्घोपरोधात्तत्रत्या अध्यक्षाः सूरयो मल्लवादिनः समाकारिताः । ते यावद्देवगृहं प्रविशन्ति तावत्पठन्ति—

"अस्मिन्नसारे संसारे सारं सारङ्गलोचना ।"

मन्त्रिभ्यां श्रुतं चिन्तितं च । अहो । मठपतिर्गृहवद्देवगृहेऽपि शृङ्गाराङ्गगर्भं पद्यं प्रस्तौति । देवनमस्कारादिकमुचितमिह तन्नाधीते, तस्माद्दृष्टव्योऽसौ । उपविष्टः सूरिः । अन्येऽपि शतशः सूरयः पङ्क्तौ निषिण्णाः । मङ्गलदीपान्तेऽपरसूरिभिर्मल्लवादिन एवाशीर्वादाय प्रेरिताः । मन्त्री पुरस्तिष्ठति । "अस्मिन्नसारे संसारे" इत्यादिपादद्वयं भणितं तैः । मन्त्री हस्तेन वन्दित्वा विरक्तो गतः स्वोत्तारकम् । दिनान्यष्ट एवं पाठश्च । मन्त्र्यवज्ञा चारोहत्प्रकर्षं । अष्टम्यां रात्रौ मन्त्री मुत्कलापनिकां कर्तुं देवरङ्गमण्डपे निविष्टः । पुरो धनवद्रकाः । कोऽपि कविराह—

श्रीवस्तुपाल ! तव भालतले जिनाज्ञा वाणी मुखे हृदि कृपा करपल्लवे श्रीः ।
देहे द्युतिर्विलसतीति रुषेव कीर्त्तिः पैतामहं सपदि धाम जगाम नाम ॥३४॥

अपरस्तु—

अनिःसरन्तीमपि गेहगर्भात्कीर्त्तिं परेषामसतीं वदन्ति ।
स्वैरं भ्रमन्तीमपि वस्तुपाल ! त्वत्कीर्त्तिमाहुः कवयः सतीं तु ॥ ३५ ॥

इतरस्तु—

सेयं समुद्रवसना तव दानकीर्त्तिपूरोत्तरीयपिहितावयवा समन्तात् ।
अद्यापि कर्णविकलेति न लक्ष्यते यत्तन्नाद्भुतं सचिवपुङ्गव वस्तुपाल !॥३६॥

कश्चित्तु—क्रमेण मन्दीकृतकर्णशक्तिः प्रकाशयन्ती च बलिस्वभावम् ।
कैर्नानुभूता सशिरःप्रकम्पं जरेव दत्तिस्तव वस्तुपाल ! ॥ ३७ ॥

तेभ्यः कविभ्यः सहस्रलक्षाणि ददिरे । एवं गायनभट्टादिभ्योऽपि । यावज्जातं प्रातरिव, तदा मल्लवादिभिः स्वसेवकाश्चैत्यद्वारद्वयेऽपि नियुक्ताः । एकं द्वारमन्यदिशि, एकं च मठदिशि । उक्तं च तेभ्यः, मन्त्री चैत्यान्निःसरन् ज्ञापनीयः । क्षणेन वस्तुपालो मठद्वारान्निर्गच्छति, तावता सेवकज्ञापिताः सूरयः संमुखाः स्थिताः । मन्त्रिणा रीढया भ्रूप्रणाम इव कृतः । आचार्यैरभिहितम्—

"दूरे कर्णरसायनं निकटतस्तृष्णापि नो शाम्यति"

बिजीयतां, तीर्थानि पूज्यन्ताम् । मन्त्री कौतुकात्तथैव तस्थौ, किं पर्यवसानेयं प्रस्तावनेति ध्यानादूचे च । न विद्मः परमार्थं किमेतदधिचक्षे । आचार्यैरुक्तं पुरो गम्यतां, भवतां कार्याणि भूयांसि । मन्त्री सविशेषं पृच्छति । सूरयो वदन्ति सचिवेन्द्र ! श्रूयताम् । मरुग्रामे कश्चिद् ग्रामाराः स्थूलबहुललोमशाः पशवो वसन्ति पर्षदि निषीदन्ति, कपोलझल्लरीं वादयन्ति । तत्रैकदा वेलाकूलीयचरः पान्थ आगमत् । नवीन इति कृत्वा ग्राम्यैराहूतः, पृष्टः, कस्त्वं कुत्यः । तेनोक्तं समुद्रतटेऽवात्सम् । पान्थः पुरो ग्रामिकैः पृष्टः, समुद्रः केन खानितः । तेनोचे स्वयम्भूः सः । पुनस्तैः पृष्टं कियान्सः । पान्थेनोक्तमलब्धपारः । किं तत्रास्ते इति पृष्टे पुनस्तेनाचख्ये—

> ग्रावाणो मणयो हरिर्जलचरो लक्ष्मीः पयोमानुषी
> मुक्तौघाः सिकताः प्रवाललतिकाः शैवालमम्भः सुधा ।
> तीरे कल्पमहीरुहः किमपरं नाम्नापि रत्नाकरः ॥ ३८ ॥

इति पादत्रयं पठित्वा व्याख्याय पुरो गतः पान्थः । तेषु ग्राम्येष्वेकः सकौतुकः पृच्छम्पृच्छं समुद्रतटमगात् । दृष्टः कल्लोलमालाचुम्बितगगनाग्रः समुद्रः । तुष्टः सः, अचिन्तयच्च ऋद्धयः सर्वा लप्स्यन्ते; प्रथमं तृषितः सलिलं पिबामि । तद्दग्धः कोष्ठः । ततः पठति—

> वरि वियरो जहिं जणु पियइ घुट्टुग्घुट्टु चुलुएहिं ।
> सायरि अत्थि बहु य जल छि खारउं किं तेण ॥ ३९ ॥

तैरेव पादैर्नष्टः स्वास्पदं गतः । तथा वयमपि स्मः । मन्त्रिणोक्तं कथं तथा यूयं, यथा स ग्राम्यः । सूरयस्तारमूचुः । महामात्य ! वयमिह पार्श्वनाथसेवकाः त्रैविद्यविद्याविदः सर्वेऽपि शृणुमः, यथा धवलक्कके श्रीवस्तुपालो मन्त्री सरस्वतीकण्ठाभरणो भारतीप्रतिपन्नपुत्रो विद्वज्जनमधुकरसहकारः सारासारविचारविदास्ते । तदुत्कण्ठितास्तत्रागन्तुमीश्वरत्वाच्च न गच्छामः । क्वापि कदाचिदत्र तीर्थमित्येताऽत्र मन्त्री । तस्य पुरो वक्ष्यामः स्वैरं सूक्तानि इति ध्यायतामस्माकं मन्त्रिमिश्रा अप्यागताः । यावत्पठ्यते किमपि तावदसम्भावनयाऽवज्ञापरा यूयं स्थिताः । ततः किं पठ्यते गच्छत, उत्सूरं भवति । मन्त्री प्राह मम मन्तुः क्षम्यतां, किमेतत् पठितुमारेभे भवद्भिः । आचार्या जगदुः । देव ! यदा युवां बान्धवौ श्रावकश्रेण्यग्रे राजराजेश्वरौ दिव्यभूषणौ, श्रावकाश्च धनाढ्या दृष्टाः, गीताद्युच्छ्रयः, तदैतन्नश्चित्ते बभूव । जगति स्त्रीजातिरेव धन्या, यत्सुवो जिनचक्र्यर्धचक्रिनलकर्णयुधिष्ठिरविक्रमशातवाहनादयो जाताः । सम्प्रत्यपि ईदृशाः सन्ति, तस्मात्

श्रीशाम्बश्रीशान्तिब्रह्मनागआमदत्तनागडवंश्यश्रीआमूनंदिनी श्राविकोत्तमा कुमारदेवी श्लाघ्या, यया एतौ कलियुगमहान्धकारे मज्जज्जिनधर्मप्रकाशनप्रदीपौ ईदृशौ नन्दनौ जातौ। इत्येवं चिन्तयतामस्माकं पद्यपादद्वयं वदनादुद्गतं, जिननमस्कारादि विस्मृतम्। पश्चार्द्धं तु शृणुत—

यत्कुक्षिप्रभवा एते वस्तुपाल! भवादृशाः ॥ ४० ॥

सविस्तरं व्याख्यानं कृतम्। जिह्राय सचिवेन्द्रः। पदोर्लगित्वा सूरीन्क्षमयित्वा क्रोशान्ते ग्राम एक आगात्। तत्र स्नातभुक्तविलिप्तः स्वं भृत्यं सचिवमेकमाकार्य समादिक्षत्। इयं वाहिमी मे सहस्रदशकबदरकयुक् सूरिभ्यो देया। गतो मन्त्रिसेवकस्तत्र। भाषिताः सूरयः, मन्त्रिदत्तमिदमवधार्यताम्। आचार्यैर्दृष्टम्। अश्वमारुह्य भटशतोल्लासितकृपाणजलप्लावितखास्तत्र गताः,यत्र श्रीवस्तुपालः; उदितश्च तैः। मन्त्रिन्! किमहमुचितभाषी किं चारणः किं बन्दी, किन्तु सर्वसिद्धान्तपारगः सम्यग्जैनः सूरिः। मया मनःप्रमोदेन यद्व उपश्लोकनमुक्तं तन्मूल्यभूतामिमां वो दत्तिं कथं गृह्णामि। न मयेदं वित्तायाभिहितम्, किन्त्विदमन्तर्मानसं ध्यात्वा यथाऽद्यापि जयति जिनपतिमतम्। न गृह्णाम्येव। मन्त्र्यप्याह भवन्तो निःस्पृहत्वान्न गृह्णीध्वे। वयं तु दत्तत्वान्न प्रतिगृह्णीमः। कथमनेन हेम्ना भवितव्यमिति शिक्षां दत्त। ततः सूरिर्जगदे जगदेकदानी मन्त्री। मन्त्रिन्! स्वगृहाय सम्प्रति गम्यते भवद्भिः तीर्थाय कस्मैचिद्वा। मन्त्र्याह, इतो भृगुपुरं श्रीसुव्रततीर्थवन्दनार्थं गच्छन्तः स्मः। आचार्याः प्राहुः तर्हि लब्ध एतद्धेमव्ययोपायः। तत्र लेप्यमयी प्रतिमा आस्ते। तत्र स्नात्रसुखासिका न पूर्यते श्रावकाणाम्। तस्मादनेन राया रीरीहेममयीं स्नात्रप्रतिमां निर्मापयत। मन्त्रिणो ध्वनितं तत्, तथैव च कृतम्। ततः समायातः स्वसदनं गूर्जरेन्द्रमन्त्री।

अन्येद्युरादर्शे प्रातर्वदनं पश्यता सचिवेन पलितमेकमालोकि। अपाठि च—

अधीता न कला काचिन्न च किञ्चित्कृतं तपः।
दत्तं न किञ्चित्पात्रेभ्यो गतं च मधुरं वयः ॥ ४१ ॥
आयुर्जीवितवित्तेषु स्मृतिशेषेषु या मतिः।
सैव चेज्जायते पूर्वं न दूरे परमं पदम् ॥ ४२ ॥
आरोहन्ती शिरः स्वान्ताद्दौस्त्यं तनुते जरा।
शिरसः स्वान्तमायान्ती दिशते नीचतां पुनः ॥ ४३ ॥

लोकः पृच्छति मे वार्त्तां शरीरे कुशलं तव ।
कुतः कुशलमस्माकमायुर्याति दिने दिने ॥ ४४ ॥

ततोऽधिकं जिनधर्मे रेमे ।

अथैकदा द्वावपि भ्रातरौ श्रीवीरधवलं व्यजिज्ञपताम् । देव ! देवपादैरियं गूर्जरधरा साधिता । राष्ट्रान्तराणि करदानि । यद्यादेशः स्यात्तदा राज्याभिषेकोत्सवः क्रियते । राणकेनोक्तं मन्त्रिणौ ऋजू भक्तिजडौ ।

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ।
अदत्त्वा चार्थमर्थिभ्यो भवेयं पार्थिवः कथम् ? ॥ ४५ ॥

अतो राणकत्वमेवास्तु । इत्युक्त्वा व्यसृजत्तौ ।

एकदा मन्त्रिभ्यां श्रीसोमेश्वरादिकविभ्यो विपुला वृत्तिः कृता भूम्यादिदानैः । ततः पठितं सोमेश्वरेण—

सूत्रे वृत्तिः कृता पूर्वं दुर्गसिंहेन धीमता ।
विसूत्रे तु कृता तेषां वस्तुपालेन मन्त्रिणा ॥ ४६ ॥

श्रीवीरधवलोऽपि सेवकान्सुष्ठु पदवीमारोपयन् जगत्प्रियोऽभूत् । किमुच्यते तस्य ? पश्यत ! पश्यत ! । श्रीवीरधवलो ग्रीष्मे चन्द्रशालायां सुप्तोऽस्ति, वण्ठश्चरणौ चम्पयत्येकः । पटीपिहितवदनो जाग्रदपि वण्ठेन सुप्तो मेने । ततश्चरणाङ्गुलिस्था रत्नाङ्कमुद्रा जगृहे, मुखे च चिक्षिपे । राणकेन किमपि नोक्तम् । उत्थितो राणः । भाण्डागारिकपार्श्वाद्गृहीत्वाऽन्या मुद्रा तादृगेव पादाङ्गुलौ स्थापिता । द्वितीयदिने पुना राणस्तत्रैव चन्द्रशालायां प्रसुप्तः । वण्ठश्चरणौ चम्पयति । राणः पटीस्थगितवदनोऽस्ति । वण्ठः पुनः पुनर्मुद्रामालोकते । अहो प्राक्तनीवेयं । ततो राणकः प्राह भोम् वण्ठ ! इमां मुद्रां मा ग्रहीः, या कल्ये गृहीता सा गृहीता । तद्वचनाकर्णन एव वण्ठो भीत्या वज्राहत इवास्थात् । यतः—

हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः ।
स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः ॥ ४७ ॥

तां तस्य दीनतां दृष्ट्वा राणेन भणितं वत्स ! मा भैषीः । अस्माकमेवायं कार्पण्यदोषो येन तेऽल्पा वृत्तिः । इच्छा न पूर्यते, ततो बह्वपाये चौर्यबुद्धिः । अतःपरं हय आरोहाय दीयमानोऽस्ति लक्षार्धं वृत्तौ । इत्याश्वासितः सः । अतो वीरधवलः क्षमापरत्वाज्जगद्वल्लभः सेवकसदाफलत्वेन पप्रथे । स सहजदयार्द्र इति मन्त्रिभ्यां रहःकथान्तरे शान्तपर्वणि द्वैपायनोक्तभीष्मयुधिष्ठिरोपदेशवा-

रायातं द्वैपायनोक्तं द्वात्रिंशदधिकारमयेतिहासशास्त्रीयाऽष्टाविंशाधिकारस्थं च शिवपुराणमध्यगतं च मांसपरिहारं व्याख्याय व्याख्याय प्रायो मांसमद्यमृगयाविमुखः कृतः। मलधारिश्रीदेवप्रभसूरिसविधे व्याख्यां श्रावंश्रावं सविशेषं तेन तत्त्वपरिमिलितमतिः कृतः। अन्येद्युर्वस्तुपालोऽब्राह्मे मुहूर्त्ते विमृशति। यद्यर्हद्यात्रा विस्तरेण क्रियते तदा श्रीः फलवती।

वञ्चयित्वा जनानेतान्सुकृतं गृह्यते श्रिया।
तत्ततो गृह्यते येन स तु धूर्तधुरन्धरः॥ ४८॥
नृपव्यापारपापेभ्यः सुकृतं स्वीकृतं न यैः।
तान्धूलिधावकेभ्योऽपि मन्ये मूढतरान्नरान्॥ ४९॥

इत्यादि विमृश्य तेजःपालेन नित्यभक्तेन साम्मत्यं कृत्वा मलधारिश्रीनरचन्द्रसूरिपादानपृच्छत्। भगवन् या मे चिन्ताऽधुना सा निष्प्रत्यूहं सेत्स्यति। प्रभुभिः शास्त्रकिरीटैरुक्तम्। जिनयात्राचिन्ता वर्त्तते सा सेत्स्यति। वस्तुपालेन गदितं तर्हि देवालये वासक्षेपः क्रियताम्। श्रीनरचन्द्रसूरयः प्राहुः। मन्त्रीश! वयं ते मातृपक्षे गुरवो, न पितृपक्षे। पितृपक्षे तु नागेन्द्रगच्छीयाः श्रीअमरचन्द्रसूरिश्रीमहेन्द्रसूरिपट्टे श्रीविजयसेनसूरयः, यैर्वस्तुपालः प्रथमगुणस्थानगतोऽपि बोधितः। एकदा विजयसेनसूरयो वन्दापयितुमागताः। ब्राह्मणवेष्टितो गवाक्षस्थो वस्तुपालो नोत्तस्थौ। मातृकुमारदेवीप्रबन्धेन मिलितो मन्त्री। क्षामिता गुरवः। गुरुभिरुक्तं मन्त्रिन्! वयं ठक्कुरचण्डपचण्डप्रसादसोमआसराजतनूद्भवस्य कुमारदेवीकुक्षिसरोवरराजहंसस्य वस्तुपालस्य गृहं मत्वा समायाताः। परमग्रे मद्यगृहं दृष्टम्। मन्त्रिणोक्तं कुतः?। तैरुक्तम्—

जीवादिशेति पुनरुक्तिमुदीरयन्तः कुर्वन्ति दास्यमपि वण्ठजनोचितं ये।
तेष्वेव यद्गुरुधियं धनिनो विदध्युः सोऽयं विभूतिमदपानभवोऽपराधः ५०॥

ततः प्रबुद्धो वस्तुपालो गुरून्क्षामयामास। ते श्रीउदयप्रभसूरिसंज्ञकशिष्ययुजो विशालगच्छाः पीलुयाईदेशे वर्त्तन्ते। ते वासनिक्षेपं कुर्वन्तु, न वयम्।

जा जस्स ठिई जा जस्स संतई पुव्वपुरिसकयमेरा।
कंठट्ठिए वि जीवे सा तेण न लंघइव्वत्ति॥ ५१॥

मन्त्र्याह। अस्माभिर्भवदन्तिके त्रैविद्यषडावश्यककर्मप्रकृत्यादि सर्वमधीतम्। यूयमेव गुरवः। प्रभुभिरुक्तं नैवं वाच्यं, लोभपिशाचप्रसङ्गजनकत्वात्।

ततो मन्त्रिभ्यां मरुदेशगुरवः शीघ्रमाबायिताः । मुहूर्तप्रतिष्ठा देवालयप्रस्थानं वासनिक्षेपणं कुलगुरुभिः कृतं, साधर्मिकवात्सल्यं शान्तिकं मारिवारणं स्वामिपूजनं लोकरञ्जनं चैत्यपरिपाटीपर्यटनं च विहितम् ।

अथ प्रतिलाभना । तत्र मिलिताः कवीश्वराः नरेश्वराः सङ्घेश्वराः । दत्तानि कौशेयकटककुण्डलहारादीनि लोकेभ्यः । यतिपतिभ्यस्तु तदुचितानि कम्बलभोज्यादीनि । तदा श्रीनरचन्द्रसूरिभिः सङ्घानुज्ञातैर्व्याख्या कृता ।

चौलुक्यः परमार्हतो नृपशतस्वामी जिनेन्द्राज्ञया
निर्ग्रन्थाय जनाय दानमनघं न प्राप जानन्नपि ।
स प्राप्तस्त्रिदिवं स्वचारुचरितैः सत्पात्रदानेच्छया
त्वद्रूपोऽवततार गूर्जरभुवि श्रीवस्तुपाल ! ध्रुवम् ॥ ५२ ॥

ध्वनितः सङ्घः ।

सकलस्यापि वर्षस्य स एव दिवसः शुभः ।
यस्मिन्तीर्थमरेर्नाशः सज्जनश्च निरीक्ष्यते ॥ ५३ ॥

अथ चलितः सुशकुनैः सङ्घः । मार्गे सप्तक्षेत्राण्युद्धरन् श्रीवर्द्धमानपुरासन्नमावासितः । वर्द्धमानपुरमध्ये तदा बहुजनमान्यः श्रीमान् रत्नश्रावको वसति । तद्गृहे दक्षिणावर्त्तशङ्खः पूज्यते । स रात्रौ करण्डान्निर्गत्य स्निग्धगम्भीरं घुमुघुमायमानो नृत्यति च । तस्य प्रभावात्तस्य गृहे चतुरङ्गा लक्ष्मीः । शङ्खेन रात्रौ रत्न आलापि । तव गृहेऽहं चिरमस्थामिदानीं तव पुण्यमल्पम् । मां श्रीवस्तुपालपुरुषोत्तमकरपङ्कजप्रणयिनं कुरु । सत्पात्रे दानात्त्वमपीह परत्र च सुखीभवेः । व्यक्तं तज्ज्ञात्वा रत्नो विपुलसामग्र्याऽभिमुखो गत्वा मन्त्रीशं स्वगृहे बहुपरिकरं भोजयित्वा परिधाप्योचे । एवमेवं शङ्खादेशो मे, गृहाणेमम् । मन्त्र्याह न वयं परधनार्थिनः पिशुनाच्छङ्खसत्तां ज्ञात्वा तं गृहीष्यति स्वयं मन्त्री, तस्मात्स्वयमेव ददामीति । अपि मा शङ्किष्ठाः, निर्लोभत्वादस्माकमास्माकप्रभूणां चेत्युक्त्वा विरते मन्त्रिणि, रत्नेन गदितम् । देव ! मद्गृहावस्थानमस्मै न रोचते । ततः किं क्रियते गृहाणैव । ततो गृहीतो मन्त्रिणा शङ्खः । तत्प्रभावोऽनन्तः । शनैः सङ्घः श्रीशत्रुञ्जयतलहट्टिकामाप । तत्र ललितासरःप्रासादादिकीर्त्तनानि पश्यन्प्रमुदितः ससङ्घः सचिवः आरूढः शत्रुञ्जयाद्रिम् । सविवेकभावं च तत्र मन्त्री वृषभं वन्दते । तदा काव्यपाठः—

आस्यं कस्य न वीक्षितं क न कृता सेवा न के वा स्तुता-
स्तृष्णापूरपराहतेन मनसा के के च नाभ्यर्थिताः ।

तन्नान्तर्विमलाद्रि नन्दनवनाकल्पैककल्पद्रुम !

त्वामासाद्य कदा कदर्थनमिदं भूयोऽपि नाहं सहे[1] ॥ ५४ ॥

अथाचारितसत्रमेरुध्वजारोपणेन्द्रपदार्थिरञ्जनादीनि कर्तव्यानि विहितानि। देवेभ्यो हैमानि आरात्रिकतिलकादीनि दत्तानि । कुङ्कुमकर्पूरागुरुचन्दनकुसुमपरिमलमिलदलिकुलझङ्कारभारपूरितमिव गगनमभवत्। गीतरासध्वनिभिर्दिक्कुहराणि अभ्रियन्त । पूर्वं मन्त्रिश्रीउदयनदत्ता देवदायाः सर्वेऽपि सविशेषाः कृताः । देवद्रव्यनाशनिषेधार्थं चत्वारि श्रावककुलान्यद्रौ मुक्तानि । अनुपमा दानाधिकारिणी । तस्याः साधुभ्यो दानानि ददत्याः किल महति वृन्दे पतता घृतकडहट्टकेन क्षौमाण्यभ्यक्तानि । तदा याष्टिकेन कडहट्टकभृते साधवे यष्टिप्रहारलेशो दत्तः। मन्त्रिण्या देशनिर्वासनं समादिष्टम्। रे! न वेत्सि यद्यहं तैलिकपत्नी कान्दविकी वाऽभविष्यम्, तदा प्रतिपदं तैलघृताभिषङ्गान्मलिनान्येव वासांसि अभविष्यन्। एवं तु वस्त्राभ्यङ्गो दर्शनप्रसादादेव स्यात्। य इदं न मन्यते तेन नो नहि कार्यमेवेत्युक्तम्। अहो! दर्शनभक्तिरिति ध्वनितं सर्वम्। एकदा मन्त्रीश्वरो नाभेयपुर आरात्रिके स्थितोऽस्ति दिव्यधवलवासाश्चान्दनतिलको दिव्यपदकहारभूषितोरःस्थलः। सूरीणां कवीनां श्रावकश्राविकानां च ततिः। तिलकं तिलकोपरि पुष्पस्रक् पुष्पस्रगुपरि। तदा सूत्रधारणैकेन दारवी कुमारदेव्या मातुर्मूर्त्तिर्महन्तकाय नवीनघटिता दृष्टौ कृता। उक्तं च तेन मातुर्मूर्त्तिरियम्। तदा मन्त्रीश्वरेणाशिखनखं दृष्ट्वा मूर्त्तिः रुदितं च। प्रथममश्रुमात्रं, ततोऽव्यक्ततरो ध्वनिः, ततो व्यक्ततरः। सर्वे तटस्थाः पृच्छन्ति। देव! किं कारणं रुद्यते। हर्षस्थाने को विषादः ?। श्रुतशील इव नलस्य, उद्धव इव विष्णोः, अभय इव श्रेणिकस्य, कल्पक इव नन्दनस्य, जाम्बक इव वनराजस्य, विद्याधर इव जयन्तराजस्य, आलिग इव सिद्धराजस्य, उदयन इव कुमारपालस्य, त्वं मन्त्री वीरधवलस्य। विपद्भीताः पर्वता इव सागरं त्वामाश्रयन्ति भूपाः, तार्क्ष्येणेव पन्नगास्त्वया हताः सपत्नाः पृथिवीपालाः, चन्द्रायेव चकोरास्तुभ्यं स्पृहन्ति स्वजनाः, हिमवत इव गङ्गा त्वत्तः प्रभवति राजनीतिः, भानोरिव पद्मास्तवोदयमीहन्ते सूरयः, विष्णाविव त्वयि रमते श्रीः, तन्नास्ति यन्नास्ति ते। ततो मन्त्रिणोक्तं दुःखमिदं यन्मे भाग्यसङ्घाधिपत्यादिविभूतिर्मातृमरणादनन्तरं सम्पन्ना। यदि तु सा मे माता इदानीं स्यात्तदा स्वहस्तेन

(1) This verse occurs as the 9th stanza of Vastupâla's Âdîśvara Stotra. See Naranârâyaṇânanda p. 64.

मङ्गलानि कुर्वत्यास्तस्या मम च मङ्गलानि कारयतः, पश्यतश्च लोकस्य, कियत्सुखं भवेत् । परं किं कुर्मो धात्रा हताः स्मः । ततः श्रीनरचन्द्रसूरिभिर्मलधारिभिरभिहितं मन्त्रीश्वर ! यथा त्वं सचिवेषु तथाऽत्र देशे प्रधानं राजसु सिद्धराजो व्यजयत । स मालवेन्द्रं जित्वा पत्तनमागतो मङ्गलेषु क्रियमाणेष्वपाठी-यथा—

मा स्म सीमन्तिनी कापि जनयेत्पुत्रमीदृशम् ।
बृहद्भाग्यफलं यस्य मृतमातुरनन्तरम् ॥ ५५ ॥

तस्मान्न सर्वेऽपि नृणां मनोरथाः पूर्यन्ते । श्रीनरचन्द्रसूरिभिराशीर्दत्ता—

तवोपकुर्वतो धर्मं तस्य त्वामुपकुर्वतः ।
वस्तुपाल ! द्वयोरस्तु युक्त एव समागमः ॥ ५६ ॥ इति ।

अथ रात्रौ तन्मयतया नाभेयपूजाध्यानदानपूजाः । तदा कवयः पठन्ति—

ये पापप्रवणाः स्वभावकृपणाः स्वामिप्रसादोल्बणा-
स्तेऽपि द्रव्यकणाय मर्त्यभषणा जिह्वे भवत्या स्तुताः ।
तस्मात्त्वं तदघापघातविधये बद्धादरा साम्प्रतं
धर्मस्थानविधानधर्षितकलिं श्रीवस्तुपालं स्तुहि ॥ ५७ ॥

अपरस्तु—

सूरो रणेषु चरणप्रणतेषु सोमो वक्रोऽतिवक्रचरितेषु बुधोऽर्थबोधे ।
नीतौ गुरुः कविजने कविरक्रियासु मन्दोऽपि च ग्रहमयो नहि वस्तुपालः ॥ ५८ ॥

अन्यस्तु—श्रीभोजवदनाम्भोजवियोगविधुरं मनः ।
श्रीवस्तुपालवक्त्रेन्दौ विनोदयति भारती ॥ ५९ ॥

इतरस्तु—श्रीवासाम्बुजमाननं परिणतं पञ्चाङ्गुलीछद्मतो
जग्मुर्दक्षिणपक्षशाखमयतां पञ्चापि देवद्रुमाः ।
वाञ्छापूरणकारणं प्रणयिनां जिह्वैव चिन्तामणि-
र्जाता यस्य किमस्य शस्यमपरं श्रीवस्तुपालस्य तत् ॥ ६० ॥

सर्वत्र लक्षदानम् । अष्टाह्निकायां गतायां श्रीऋषभदेवं गद्गदोक्त्या मन्त्र्यपृच्छत् ।

त्वत्प्रासादकृते नीडे वसन् शृण्वन्गुणांस्तव ।
सद्भक्तदर्शनतुष्टात्मा भूयासं विहगोप्यहम् ॥ ६१ ॥
यद्दाये द्यूतकारस्य यत्प्रियायां वियोगिनः ।
यद्राधावेधिनो लक्ष्ये तद्ध्यानं मेऽस्तु ते मते ॥ ६२ ॥

एवं ससङ्घः सचिवश्चलितः । मरुदेवाशिखराग्रे यावत्कियदपि याति तावच्छ्रमवशाविगलत्स्वेदक्लिन्नगात्रवसनान्कियतो मालिकान् पुष्पकरण्ड-भारितशिरसोऽपश्यत् । पृष्टास्ते कथमुत्सुका इव यूयम् । तैर्विज्ञप्तं देव ! वयं दूरात्पुष्पाण्यहार्ष्म । सङ्घः किल शत्रुञ्जयशिखरेऽस्ति, प्रकृष्टं मूल्यं लप्स्यामहे । तत्पुनरन्यथा वृत्तं, सङ्घश्चलितः, तस्माद्भाग्या वयम् । इति तेषां दैन्यं दृष्ट्वा मन्त्रिणाऽभाणि । अत्रैव स्थीयतामूर्ध्वेक्षणम् । तावता पाश्चात्यं सर्वमापतितम् । श्रीवस्तुपालेन स्वकुटुम्बं सङ्घश्चाभण्यत, यथा भो धन्याः ! सर्वेषां पूर्णस्तीर्थपूजाभिलाषः ? । लोकेनोक्तं पूर्णः । मन्त्र्याह किमपि तीर्थमपूजितं स्थितम् । लोकः प्राह प्रत्येकं सर्वाणि तीर्थानि पूजितानि ध्यातानि । मन्त्रि-महेन्द्रः प्राह यद्विस्मृतं तन्न जानीथ यूयं, वयं स्मारयामः । सङ्घो वदति किं विस्मृतम् । मन्त्री गदति लोकाः ! पूर्वमयं तीर्थमयो गिरिः यत्र स्वयं ऋषभदेवः समवासार्षीत्, ततो नेमिवर्जिता द्वाविंशतिर्जिनाः समवासार्षुरसङ्ख्याः सिद्धाश्च यत्र, सोऽद्रिः कथं न तीर्थम् ? लोकोप्याह सत्यं तीर्थमेव । तर्हि पूज्यतां, पुष्पाणि क्वेति चेदिमे मालिका इमानि पुष्पाणि च पुण्यैरुपास्थिषत । ततः सङ्घेन तानि पुष्पाणि गृहीत्वाऽद्रिपूजा कृता, नालिकेरास्फालनं वस्त्रदानादिकेलयश्च । तुष्टा मालिकाः । एवं परांशाभङ्गपरान्मुख आसराजसूः । शनैः शनैः पदानुसारशिखरमपीक्ष्य सङ्घो रैवतमारुरोह च । नेमिनि दृष्टे मन्त्री ननर्त्त, पपाठ च आनन्दाश्रुनिर्झरिताक्षः—

कल्पद्रुमस्तरुरसौ तरवस्तथान्ये चिन्तामणिर्मणिरसौ मणयस्तथान्ये ।
धिग् जानिमेव दृशो वन यत्र नेमिः श्रीरैवते स दिवसो दिवसास्तथाऽन्ये६३

अभङ्गवैराग्यतरङ्गरङ्गे चित्ते त्वदीये यदुवंशरत्न ! ।
कथं कृशाङ्ग्योऽपि हि मान्तु हन्त यस्मादनङ्गोऽपि पदं न लेभे ॥ ६४ ॥

तत्राप्यष्टाह्निकाविधिः प्रागेव । नाभेयभवनकल्याणत्रयगजेन्द्रपदकुण्डान्तिकप्रासादाम्बिकासाम्बप्रद्युम्नशिखरतोरणादिकीर्त्तनदर्शनैः ससङ्घो मन्त्री नयनयोः स्वादुफलमापिपताम् । आरात्रिके चैनां ससम्भ्रमं मन्त्रिमध्ये झम्पापनं दृष्ट्वा सोमेश्वरकविः—

इच्छासिद्धिसमुन्नते सुरगणे कल्पद्रुमैः स्थीयते
पाताले पवमानभोजनजने कष्टं प्रनष्टो बलिः ।
नीरागानगमन्मुनीन् सुरभयश्चिन्तामणिः क्वाप्यगात्
तस्मादर्थिकदर्थनां विषहतां श्रीवस्तुपालः क्षितौ ॥ ६५ ॥

लक्षा सपादाऽस्य दत्तौ मन्त्रिणः । दानमण्डपिकायां निषण्णो निरर्गलं ददद्देवं स्तुतः केनापि—

पीयूषादपि पेशलाः शशधरज्योत्स्नाकलापादपि
स्वच्छा नूतनचूतमञ्जरिभरादप्युल्लसत्सौरभाः ।
वाग्देवीमुखसामसूक्तविशदोद्गारादपि प्राञ्जलाः
केषां न प्रथयन्ति चेतसि मुदं श्रीवस्तुपालोक्तयः ॥ ६६ ॥

वस्तुपाल ! तव पर्वशर्वरीगर्वितेन्दुकरजित्वरं यशः ।
क्षीरनीरनिधिवाससः क्षितेरुत्तरीयतुलनां विगाहते ॥ ६७ ॥

एवं भावमापूर्य देवोत्तमं श्रीनेमिमापृच्छ्य सर्वास्तीर्थचिन्ताः कृताः । निर्माल्यपदं दत्त्वा पर्वतादुदतारीत्, न सतां हृदयात्, नापि महत्त्वात् । अथ खङ्गारदुर्गादिदेवपत्तनादिषु देवान्ववन्दे । तेजःपालं खङ्गारदुर्गे स्थापयित्वा स्वयं ससङ्घो वस्तुःपालः श्रीधवलक्कके वीरधवलमगमत् । स्वागतप्रश्नः स्वामिना कृतः आरम्भसिद्धिप्रश्नश्च । ततो मन्त्र्याह—

कामं स्वामिप्रसादेन प्रेष्याः कर्मसु कर्मठाः ।
तद्वैभवं बृहद्भानोः क्वचिदूष्मा जलेऽपि यत् ॥ ६८ ॥

राणकेन ससङ्घः सचिवः स्वसदने भोजितः परिधापितः स्तुतश्च । तेजःपालस्तु खङ्गारदुर्गस्थो भूमिं विलोक्य तेःजपालपुरममण्डयत् सत्रारामपुरप्रपाजिनगृहादिरम्यम् । प्राकारश्च तेजःपालपुरं परितः कारितः पाषाणबद्धस्तुङ्गः ।

अथ वस्तुपालः श्रीवीरधवलपार्श्वे सेवां विधत्ते, देशः स्वस्थः, धर्मो वर्त्तते । एवं सति एकदा ढिल्लीनगरादेत्य चरपुरुषैः श्रीवस्तुपालो विज्ञप्तः । देव ! ढिल्लीतः श्रीमोजदीनसुरत्राणस्य सैन्यं पश्चिमां दिशमुद्दिश्य चलितं चत्वारि प्रयाणानि व्यूढं, तस्मात्सावधानैः स्थेयम् । मन्येऽर्बुददिशा गूर्जरधरां प्रवेष्टा । मन्त्रिणा सत्कृत्य ते चरा राणकपार्श्वे नीताः, कथितः स प्रबन्धः । ततो राणकेनाप्यभाणि वस्तुपाल ! म्लेच्छैर्गर्दभिल्लो गर्दभीविद्यासिद्धोऽप्यभिभूतः । नित्यं सूर्यबिम्बनिर्यत्तुरङ्गमकृतराजपाटीकः शिलादित्योऽपि पीडितः । सप्तशतयोजनभूमिनाथो जयन्तचन्द्रोऽपि क्षयं गतः । विंशतिवारबद्धरुद्धसहावदीनसुरत्राणमोक्ता पृथ्वीराजोऽपि बद्धः । तस्माद्दुर्जेया अमी । किं कर्त्ताऽसि ? । वस्तुपाल उवाच स्वामिन् ! प्रेषय मां यदुचितं तत्करिष्यामि । ततः साराश्वलक्षेण चलितो मन्त्री तृतीये प्रयाणे महणकदेवीं कर्पूरादिमहापूजापूर्वं सस्मार । सा तद्भाग्यात्प्रत्यक्षीभूयोवाच वत्स ! मा भैषीः । अर्बुददिशा यवनाः प्रवेक्ष्यन्ते । तव देशं

यदा अमी प्रविशन्ति, तदैव लङ्घिता घट्टिकाः स्वराजन्यै रोधयेथाः । आवासान् यत्र गृह्णन्ति, तत्र स्थिरचित्तः ससैन्यो युद्धाय सरभसं ढौकेथाः । जयश्रीः करपञ्जरे एव । इदं श्रुत्वा धारावर्षायार्बुदगिरिनायकाय स्वसेवकाय नरान्प्रैषयत्, अकथापयच्च म्लेच्छसैन्यमर्बुदमध्ये भूत्वा आजिगमिषदास्ते । त्वं तानागच्छतो मुक्त्वा पश्चाद्धण्टिका रुन्ध्याः । तेन तथैव कृतम् । प्रविष्टा यवनाः यावदावासान् गृहीष्यन्ति तावत्पतितो वस्तुपालः कालः । हन्यन्ते यवनाः । उच्छलितो बुम्बारवः । केचिद्दन्ताङ्गुलीर्गृह्णन्ति, अपरे तोबां कुर्वन्ति, न तु छुटन्ति । एवं तान्हत्वा तच्छीर्षलक्षैः शकटानि भृत्वा धवलक्कमेत्य मन्त्री स्वस्वामिनमदर्शयत् । श्लाघितश्च तेनायं—

> न ध्वानं तनुषे न यासि विकटं नोच्चैर्वहस्याननं
> दर्पान्नो लिखसि क्षितिं खुरपुटैर्नावज्ञया वीक्षसे ।
> किन्तु त्वं वसुधातलैकधवल ! स्कन्धाधिरूढे भरे
> तीर्थान्युन्नतटीविटङ्कविषमाण्युल्लङ्घयन्लक्ष्यसे ॥ ६९ ॥

ततः परिधापितः विसृष्टः स्वगृहाय । तत्र मङ्गलकरणाय लोकागमः । द्रम्मेण पुष्पं लभ्यते । एवं पुष्पलक्षकूल्ययो लोकैः कृतः ।

इतश्च नागपुरे साधुदेल्हासुतः साधुपूनडः श्रीमोजदीनसुरत्राणपत्नीबीबीप्रतिपन्नबान्धवोऽश्वपतिगजपतिनरपतिमान्यो विजयते । तेन प्रथमं शत्रुञ्जये यात्रा त्रिसप्तत्यधिकद्वादशशतवर्षे बब्बेरपुराद्विहिता । द्वितीया सुरत्राणादेशात्, षडशीत्यधिकद्वादशशतसङ्ख्यवर्षे नागपुरात्कर्तुमारब्धा । अष्टादशशतानि शकटानि बहवो महीधराः । कुमारनेनासहितो माण्डव्यपुरं यावद्यातः । ततः सम्मुखमागत्य महन्तकतेजःपालेन धवलक्कमानीतः । श्रीवस्तुपालः सम्मुखमागमत् । सङ्घस्य धूली पवनानुकूल्याद्यां दिशमनु धावति, मन्त्री तत्र गच्छति । तटस्थैर्भणितं, मन्त्रीश ! इतो रजः रजः पादोऽवधार्यताम् । ततः सचिवेन बभणे । इदं रजः स्प्रष्टुं पुण्यैर्लभ्यतेऽनेन रजसा स्पृष्टेन वृजिनरजांसि दूरे नश्यन्ति । ततः सङ्घपतिपूनडमन्त्रिणोर्गाढालिङ्गनप्रियालापौ संवृत्तौ । सरस्तीरे स्थितः पूनडः कुलगुरुमलधारिश्रीनरचन्द्रसूरिपादान् ववंदे । रात्रौ वस्तुपालेन कथापितं पूनडाय पुण्यात्मने । प्रातः सर्वसङ्घेनास्मद्वसत्यतिथिना युष्मता च भवितव्यम् । धूमो न कार्यः । पूनडेन तथेत्यादृतम् । रात्रौ मण्डपो द्विद्वारो रसवतीप्रकाराश्च सर्वं निष्पन्नम् । प्रातरायान्ति नागपुरीयाः । सर्वेषां चरणक्षालनं तिलकरचनां च श्रीवस्तुपालः स्वहस्तेन करोति । एवं लग्ना द्विप्रहरी, मन्त्री तु

तथैवानिर्विण्णः । तदा तेजःपालेन विज्ञसमन्यैरपि देव ! वयं सङ्घपादक्षालनादि कारयिष्यामः, यूयं भुङ्क्ष्व, तापो भावी । मन्त्रिनरेन्द्रेणोक्तं मैवं वदत, पुण्यैरयं वासरो लभ्यते । गुरुभिरपि कथापितम्—

> यस्मिन्कुलेऽयः पुरुषः प्रधानः स एव यत्नेन हि रक्षणीयः ।
> तस्मिन्विनष्टे हि कुलं विनष्टं न नाभिभङ्गे त्वरका वहन्ति ॥७०॥

तस्मान्नोक्तव्यं भवद्भिः, तापो माभूत् । मन्त्री पत्नीं गुरुभ्यो विज्ञपयितुं प्रैषीत् । तत्र काव्यम्—

> अद्य मे फलवती पितुराशा मातुराशिषि शिखाङ्कुरिताऽद्य ।
> यद्युगादिजिनयात्रिकलोकं पूजयाम्यहमशेषमखिन्नः ॥ ७१ ॥

भोजयता मन्त्रिणा नागपुरीयाणामेकपङ्क्तित्वं दृष्ट्वा शिरो धूनितम् । अहो शुद्धा लोका एते । एवं भोजयित्वा परिधाप्य च रञ्जितो नागपुरसङ्घः । गतौ वस्तुपालपूनडौ शत्रुञ्जयं ससङ्घौ, वन्दित ऋषभः । एकदा स्नात्रे सति देवार्चको देवस्य नासां पिधत्ते पुष्पैः किल कलशेन नासा मापीडीत्याशयतः । तदा मन्त्रिणा चिन्तितं कदाचिद्देवाधिदेवस्य कलशादिना परचक्रेणापि वाऽवक्तव्यममङ्गलं भवेत् । तदा का गतिः सङ्घस्येति चिन्तयित्वा पूनड आलेपे, भ्रातः सङ्कल्पोऽयमेवं संवृत्तो मे यदि बिम्बान्तरं मम्माणीमयं क्रियते तदा सुन्दरतरम् । तत्तु सुरत्राणमोजदीनमित्रे त्वयि यतमाने स्यान्नान्यथा । पूनडेनोक्तं तत्र गतैश्चिन्तयिष्यते । इत्यादि वदन्तौ रैवतादितीर्थानि वन्दित्वा व्यावृत्तौ । गतः पूनडो नागपुरम् । मन्त्री धवलक्कके राज्यं शास्ति । एवं स्थितेऽन्येद्युः सुरत्राणमोजदीनमाता वृद्धा हजयात्राप्रार्थिनी स्तम्भपुरमागता । नौवित्तकगृहेऽतिथित्वेनास्थात् । सा समागता सचिवेन चरेभ्यो ज्ञाता । चराः प्रोक्ता मन्त्रिणा । रे यदेयं जलपथेन याति तदा मे ज्ञाप्या । गच्छन्ती ज्ञापिता तैः । मन्त्रिणा निजकौलिकान्प्रेष्य तस्याः सर्वं कोटीबकस्थं वस्तु ग्राहितम् , सुष्ठु रक्षापितं च क्वचित् । तदा नौवित्तकैः पूत्कृतमुपमन्त्रि देव ! जरत्येकाऽस्मद्गृह्या हजयात्रायै गच्छन्ती त्वत्पदे तस्करैर्लुण्ठिता । मन्त्रिणा पृष्टं का सा जरती । तैरुक्तं देव ! किं पृच्छसि सा मोजदीनमाता पूज्या । मन्त्रिणा भणितं मायया अरे वस्तु विलोकयत । आनीयार्पितं सर्वम् । जरती तु स्वगृहे आनिन्ये । विविधां भक्तिं कृत्वा पृष्टा च किं हजयात्रेच्छा वः । तयोक्तं ओमिति । तर्हि दिनकतिपयान्प्रतीक्षध्वम् । प्रतीक्षांचक्रे सा । तावतारासणाश्मीयं तोरणं घटापितं, मेलयित्वा विलोकितम् । पुनर्विघटितं सूत्रेण बद्धम् । सूत्रधाराः सह प्रगुणि-

ताः। मन्त्रिणश्च मार्गश्चान्तरे त्रिविधोऽस्ति एको जलमार्गः, अपरः करभगम्यः, इतरस्तु अश्वलङ्घ्यः। यत्र ये राजानो योऽध्वा यथा लङ्घ्यते तथा सूत्रं कृतम्। राज्ञामुपदायै द्रव्याणि प्रगुणीकृतानि। एवं सामग्र्या सा प्रहिता तत्र। रचितं तोरणं मसीतिद्वारे। तत्र दीपतैलादिपूजाचिन्ता तद्राजपार्श्वात् शाश्वती कारिता। दत्तं भूरि भूरि तत्र। उदभूद्भूरि यशः। व्यावृत्ता जरती। आनीता स्तम्भनपुरम्। प्रवेशमहः कारितः। स्वयं तदङ्घ्रिक्षालनम्। एवं भक्त्या दिनदशकं स्थापिता। तावता धवलकिशोरशतपञ्चकमन्यदपि दुकूलगन्धराजकर्पूरादि गृहीतम्। वृद्धा प्रोक्ता मातश्चलसि यथादिशसि। तत्र मानं च दापयसे तदाहमपि आगच्छामि। तया भणितं तत्राहमेव प्रभुः स्वैरमेहि पूजा ते तत्र। श्रीवीरधवलानुमत्या चलितो मन्त्रिमहेन्द्रः। गतो ढिल्लीतटम्। राजमातृवचनात्क्रोशद्वये तस्थौ। सुरत्राणः सम्मुखमागान्मातुः। माता प्रणता पृष्टा च सुखयात्राम्। जरत्या प्रोक्तं कथं न मे भद्रं यस्या ढिल्यां त्वं पुत्रः, गूर्जरधरायां वस्तुपालः। राज्ञा पृष्टं कोऽसौ वस्तुपालः?। जरत्या वृत्तान्तः प्रोक्तः तद्विनयख्यातिगर्भः। राजाह स किमिति नात्रानीतः। वृद्धा आह आनीतोऽस्ति। दर्श्यतां तर्हि। अश्ववारं प्रहित्यानाय्य दर्शितो वस्तुपालः। दत्तोपदा। आलापितश्च राज्ञा अस्मन्माता त्वां स्तौति, किञ्चिद्याचस्व। वस्तुपालेनाभिहितं देव! गूर्जरधरया सह देवस्य यावज्जीवं सन्धिरस्तु। उपलपञ्चकं मम्माणीखानितो दापय। राज्ञा मतं तत्। फलहीपञ्चकं तु पूनडेन प्रैषि शत्रुञ्जयाद्रौ। तत्रैका ऋषभदेवप्रतिमा १, द्वितीया पुण्डरीकफलही २, तृतीया कपर्दिनः ३, चतुर्थी चक्रेश्वर्याः ४, पञ्चमी तेजःपालप्रासादे पार्श्वप्रतिमा। मन्त्री स्वपुरं गतः, प्रणतः स्वस्वामी। तेन चिरदर्शनोत्कण्ठाविह्वलेन पूर्वमपि कर्णाकर्णिकया श्रुतं ढिल्ली–गमनवृत्तान्तं मन्त्रिणं पप्रच्छे। सोऽपि निरवशेषमगर्वपरः प्रचख्यौ। तुष्टो वीरधवलः। दत्ता दशलक्षी हेम्नां प्रसादेन। सा तु गृहादर्वागेव दत्ता। मिलितो मन्त्रिगृहे सर्वो लोकः, सत्कृत्य प्रेषितः। कवयस्तु पठन्ति—

श्रीमन्ति दृष्ट्वा द्विजराजमेकं पद्मानि सङ्कोचमहो भजन्ते।
समागतेऽपि द्विजराजलक्षे सदा विकाशी तव पाणिपद्मः॥ ७२॥
उच्चाटने विद्विषतां रमाणामाकर्षणे स्वामिहृदश्च वश्ये।
एकोऽपि मन्त्रीश्वर! वस्तुपाल! सिद्धस्तव स्फूर्तिमियर्त्ति मन्त्रः॥ ७३॥

एवं स्तूयमान उत्तमत्वाल्लज्जमानो वस्तुपालोऽधो विलोकयामास। ततो महानगरवासिना नानाककविना भणितम्—

एकस्त्वं भुवनोपकारक इति श्रुत्वा सतां जल्पितं
लज्जानम्रशिराः स्थिरातलमिदं यद्वीक्षसे वेद्मि तत् ।
वाग्देवीवदनारविन्दतिलक श्रीवस्तुपाल ! ध्रुवं
पातालाद्बलिमुद्दिधीर्षुरसकृन्मार्गं भवान्मार्गति ॥ ७४ ॥

तदैव कृष्णनगरीयकविकमलादित्येन भङ्ग्यन्तरमुक्तम्—

लक्ष्मीं चलां त्यागफलां चकार यां
सार्थिश्रिता कीर्तिमसूत नन्दिनीम् ।
साऽपीच्छया क्रीडति विष्टपाग्रत-
स्तद्वार्तयाऽसौ त्रपते यतो महान् ॥ ७५ ॥

अथ कदाचन मन्त्रिणा श्रुतं यथा रैवतकासन्नं गच्छतां लोकानां पार्श्वतो भरडकाः पूर्वनरेन्द्रदत्तं करमुद्ग्राहयन्ति । पोट्टलकेभ्यः कणमाणकं, कूपकात्कर्षः । एवमुपद्रूयते लोकः । तत आयतिदर्शिना सचिवेन ते भरडकाः कुहाडीयानामानं ग्रामं दत्वा तं करमुद्ग्राहयन्तो निषिद्धाः । अङ्केवालियाख्यो ग्रामस्तु ऋषभनेमियात्रिकाणां क्षीणधनानां स्वगृहाभियोग्यपाथेयद्रम्मपदे दत्तः । शत्रुञ्जयरैवतोपत्यकानगरयोः सुखासनानि कृत्वा मुक्तानि । अन्धज्वरितानां यात्रिकाणां तीर्थारोहणार्थं तद्युग्यनराणां तु ग्रासपदे शालिक्षेत्राणि प्रतिष्ठितानि । तीर्थेषु सर्वेषु देवेभ्यो रत्नखचितानि हैमभूषणानि । विदेशायातसूरिशुश्रूषार्थं सर्वदेशग्रामण्यो नियुक्ताः । लौकिकतीर्थकरणमपि तस्य स्वामिरञ्जनार्थं, न भक्त्या सम्यग्दृष्टित्वात् ।

एकदा मन्त्री धवलक्ककात्स्तम्भपुरं गतः । तत्र यानपात्रात्तुरङ्गा उत्तरन्तः सन्ति । तदा सोमेश्वरकवीन्द्र आसन्नः । मन्त्रिणा समस्या दत्ता—

प्रावृट्काले पयोराशिरासीद्गर्जितवर्जितः ।

सोमेश्वरः पूरयति स्म—

अन्तःसुप्तजगन्नाथनिद्राभङ्गभयादिव ॥ ७६ ॥

तुरङ्गमषोडशकमुचितदाने । पुनः कदाचिन्मन्त्रिणोक्तम्—
"काकः किं वा क्रमेलकः" । सोमेश्वरेण पूरितं पद्यम्—

येनागच्छन्ममाख्यातो येनानीतश्च मे पतिः ।
प्रथमं सखि ! कः पूज्यः काकः किंवा क्रमेलकः ॥ ७७ ॥

अत्रापि षोडशसहस्रद्रम्माणां दत्तिः । एवं लीलास्तस्य ।

एकदा श्रुतमैतिह्यं वृद्धेभ्यः, यथा प्राग्वाटवंशो श्रीविमलो दण्डनायकः

नेढवाहिल्योर्भ्राताऽभवत् । स चिरमर्बुदाधिपत्यमभुनक् गूर्जरेश्वरप्रसत्तेः । तस्य विमलस्य विमलमतेर्वाञ्छाद्वयमभूत् पुत्रवाञ्छा प्रासादवाञ्छा च । तत्सिद्ध्यै अम्बामुपवासत्रयेणाराराध । प्रत्यक्षीभूय सा प्राह । वत्स ! वाञ्छां ब्रूहि । विमलो जगौ पुत्रेच्छा प्रासादनिष्पत्तीच्छा चार्बुदशृङ्गे मे वर्तेते । अम्बया प्रोक्तं द्वे प्राप्ती न स्तः, एकां ब्रूहि । ततो विमलेन संसारवृद्धिमात्रफलामसारां पुत्रेच्छां मुक्त्वा प्रासादेच्छैव सफलीकर्तुमिष्टा । अम्बयोक्तं सेत्स्यत्ययं चैत्याभिलाषः, परं क्षणं प्रतीक्षस्व, यावताऽहं गिरिवरार्बुदाधिष्ठात्र्याः सख्याः श्रीमातुर्मतं गृह्णामि । विमलो ध्यानेन तस्थौ । श्रीमातृमतं लात्वा देव्यायाता अभाणीच्च ।

पुष्पस्रग्दामरुचिरं दृष्ट्वा गोमयगोमुखम् ।
प्रासादार्हां भुवं विद्याः श्रीमातुर्भवनान्तिके ॥ ७८ ॥

तत्तथा दृष्ट्वा चम्पकद्रुमसन्निधौ तीर्थमस्थापयत् । पैत्तिलप्रतिमा महती । विक्रमादित्यात्सहस्रोपरि वर्षाणामष्टाशीतौ गतायां चतुर्भिः सूरिभिरादिनाथं प्रत्यतिष्ठिपत् । विमलवसतिरिति प्रासादस्य नाम । तस्मिन् दृष्टे जन्मफलं लभ्यते । एतत्कथाश्रवणान्मन्त्री दध्यौ । वयं चत्वारोऽभूम, द्वौ स्तः, द्वौ तु मालदेवलूणिगावल्पवयसौ दिवमगाताम् । मालदेवनाम्ना कीर्त्तनानि प्रागप्यकारिषत कियन्त्यपि । लूणिगश्रेयसे तु लूणिगवसतिरर्बुदे काराप्या । एतत्तेजःपालाय प्रकाशितम् । तेन विनीतेन सुतरां मेने । अथ तेजःपालो धवलक्ककादर्बुदगिरिभूषणां चन्द्रावतीपुरीमगात् । धारावर्षराणकगृहमगात् । तेनात्यर्थं पूजितः किं कार्यमादिश्यतामित्युक्तं च । मन्त्रिणोक्तम्, अर्बुदाग्रे प्रासादं कारयामहे, यदि यूयं सहायाः स्यात । धारावर्षेण भणितं तव सेवकोऽस्मि, अहं सर्वकार्येषु धुरि योज्यः । ततो राष्ट्रिकगौग्गलिकादयो महादानैर्वशीकृताः, तथा निष्पत्स्यमानचैत्यं करैर्न भारयन्ति । दानेन भूतानि वशीभवन्ति । ततश्चन्द्रावतीमहाजनमुख्यं श्रावकं चाम्पलनामानं गृहे गत्वा आललाप । वयं चैत्यमर्बुदे कारयमो, यदि पूजासान्निध्यं कुरुध्वे । चाम्पलेनापि स्वस्य कुटुम्बान्तराणामपि देवपूजार्थं नित्यधनचिन्ता कृता । ततो मन्त्री आरासणं गत्वा चैत्यनिष्पत्तियोग्यं दलवाटकं निरकाशयत् । तद्युग्यै रहकलैश्चार्बुदोपत्यकामानीनयत् । अर्द्धक्रोशार्द्धक्रोशान्तरे हट्टानि । सर्वं लभ्यते, पशूनां नराणां कृच्छ्रं माभूदिति । उंबरिणीपथेन प्रासादनिष्पत्तियोग्यं दलं द्विगुणमुपरि गिरेः प्रवेशयामास । पुनस्तां पद्यां विषमाञ्चकार, यथा परचक्रस्य प्रवेशो न भवेत् । एवं सिद्धे कर्मणि शोभनदेवं सूत्रधारमाहूय कर्मस्थाये न्ययुङ्क्त । ऊदलाख्यं द्व्याप्तमुपरिस्थायिनमकरोत् ।

अर्थव्यये स्वैरितां समादिशत् । एवं सूत्रं कृत्वा तेजःपालो धवलक्कमागात् । निष्पद्यते प्रासादः । श्रीनेमिबिम्बं कषोपलमयं घट्यते । सूत्रधाराणां सप्तशती घटयति घाटम् । ते तु दुःशीलाः पुरः पुरोऽर्थं गृह्णन्ति, कार्यकाले पुनर्याचन्ते । तत ऊदलो मन्त्री तेजःपालाय लिखति, वदति देव! द्रम्मा विनश्यन्ति, सूत्रधाराः कर्मस्थायात्प्रथमं प्रथमं गृह्णन्ति । ततस्तेजःपालेन कथापितं द्रम्मा विनष्टा इति किं ब्रूषे । विनष्टाः किं कुथिताः? । न तावत् कुथिताः किन्तु मनुष्याणामुपकृताः । उपकृताश्चेद्विनष्टाः कथं, माता मे वन्ध्येतिवाक्यंवत्परस्परं विरुद्धं ब्रूषे । तस्मात्त्वमिदं सूत्रधाराणामिच्छाच्छेदो न कार्यः, देयमेवेति । ततो दत्ते ऊदलः । तावन्निष्पन्नं गर्भगृहम् । मध्ये श्रीनेमिनाथबिम्बं स्थापितम् । एतच्च कृतं श्रीतेजःपालाय विज्ञप्तम् । तुष्टौ द्वौ मन्त्रिणौ । श्रीवस्तुपालादेशात्तेजःपालोऽनुपमया सहानल्पपरिच्छदोऽर्बुदगिरिं प्राप्तः । प्रासादं निष्पन्नप्रायं ददर्श तुतोष । स्नात्वा सद्वस्त्रप्रावरणः सपत्नीको मन्त्री श्रीनेमिनं पूजयति स्म । अथ ध्यानेनोर्ध्वस्तस्थौ चिरम् । क्षणार्द्धेनानुपमा पतिं तथास्थं मुक्त्वा प्रासादनिष्पत्तिकुतूहलेन बहिरागात् । तत्र सूत्रधारशोभनदेवो मण्डपचतुःस्तम्भीमूर्ध्वयितुमुपक्रमते । मन्त्रिण्योक्तं सूत्रधार ! मम पश्यन्त्याश्चिरं बभूव, अद्यापि स्तम्भा नोत्तभ्यन्ते । शोभनदेवेनोक्तं स्वामिनि ! गिरिपरिसरोऽयं, शीतं स्फीतं, प्रातर्घटनं विषमं, मध्याह्नोद्देशे तु गृहाय गम्यते स्नायते भुज्यते एवं विलम्बः स्यात् । अथवा विलम्बात्किं भयम् । श्रीमन्त्रिपादाश्चिरं राज्यमुपभुञ्जानाः सन्तीह तावत् । ततोऽनुपमया जगदे । सूत्रधार ! चाटुमात्रमिदम् । कोऽपि क्षणः कीदृग्भवेत् को वेत्ति । सूत्रधारो मौनेनातिष्ठत् । पत्नीवचनमाकर्ण्य सचिवेन्द्रो बहिर्निःसृत्य सूत्रधारमवोचत् । अनुपमा किं वावदीति । सूत्रधारो व्याहार्षीत् यद्देवेनावधारितम् । मन्त्री दयितामाह किं त्वयोक्तम् ? । अनुपमाह वदन्त्यस्मि कालस्य को विश्वासः, काऽपि कालकला कीदृशी भवति । न सर्वदा तेजः पुरुषाणाम् । तथा—

श्रियो वा तस्य नाशो वा येनावश्यं विनश्यति ।
श्रीसम्बन्धे बुधाः स्थैर्यबुद्धिं बध्नन्ति तत्र किम् ॥ ७९ ॥
वृद्धानाराधयन्तोऽपि तर्पयन्तोऽपि पूर्वजान् ।
पश्यन्तोऽपि गतश्रीकानहो मुह्यन्ति जन्तवः ॥ ८० ॥
भूपभ्रूपल्लवप्रान्तनिरालम्बविलम्बिनीम् ।
स्थेयसीं बत मन्यन्ते सेवकाः स्वामपि श्रियम् ॥ ८१ ॥
इतो विपदितो मृत्युरितो जनिरितो जरा ।
जन्तवो हन्त पीड्यन्ते चतुर्भिरपि सन्ततम् ॥ ८२ ॥

एतद्वचः श्रुत्वा मन्त्रिवरः प्राह अयि कमलदलदीर्घलोचने ! त्वां विना कोऽन्य एवं वक्तुं जानाति—

ताम्रपर्णीतटोत्पन्नैर्मौक्तिकैरिक्षुकुक्षिजैः ।
बद्धस्पर्धभरा वर्णाः प्रसन्नाः स्वादवस्तव ॥ ८३ ॥
गृहचिन्ताभरहरणं मतिवितरणमखिलपात्रसत्करणम् ।
किं किं न फलति कृतिनां गृहिणी गृहकल्पवल्लीव ॥ ८४ ॥

राज्यस्वामिनि ! वद केनोपायेन शीघ्रं प्रासादा निष्पत्स्यन्ते । देव्याह नाथ ! रात्रीयसूत्रधाराः पृथक् दैनीयसूत्रधाराः पृथक् व्यवस्थाप्यन्ते । कटाहिश्चटाप्यते, अमृतानि भोज्यन्ते सूत्रधाराणां च विश्रामलाभाद्रोगो न भवति । एवं चैत्यसिद्धिः शीघ्रा । आयुर्यात्येव श्रीरस्थिरेव ।

अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ८५ ॥

इति सरस्वतीवीणाक्वणितकोमलया गिरा उक्त्वा निवृत्ता सुलक्षणा सा। मन्त्रिणा सर्वदेशकर्मस्थायेषु सैव रीतिः प्रारब्धा। निष्पन्नं च सर्वम्। गतो मन्त्री धवलक्ककम् । दिनैः कतिपयैर्वर्धापनिकानर आगतः । देव ! अर्बुदाद्रौ नेमिचैत्यं निष्पन्नम् । हृष्टौ द्वौ बान्धवौ । गतौ ससङ्घौ तत्र। तत्र च जाबालिपुरात् श्रीयशोवीरो नाम भाण्डागारिकः सरस्वतीकण्ठभूषणत्वेन ख्यातः आहूत आगात्। मिलिता वस्तुपालतेजःपालयशोवीरा एकत्र न्यायविक्रमविनया इव साक्षात् । चतुरशीति राणाः, द्वादश मण्डलीकाः, चत्वारो महाधराः, चतुरशीतिर्महाजनाः, एवं सभा । तदा वस्तुपालेन यशोवीरः प्रोचे भाण्डागारिक ! त्वमुदयसिंहस्य मन्त्री, यौगन्धरायण इव वत्सराजस्य। तव स्तुतीः स्वस्थानस्थाः शृणुमः। यथा—

बिन्दवः श्रीयशोवीर ! मध्यशून्या निरर्थकाः ।
सङ्ख्यावन्तो विधीयन्ते त्वयैकेन पुरस्कृताः ॥ ८६ ॥
यशोवीर ! लिखत्याख्यां यावच्चन्द्रे विधिस्तव ।
न माति भुवने तावदाद्यमप्यक्षरद्वयम् ॥ ८७ ॥

अत एव नः सदा भवद्दर्शनरणरणकाक्रान्तमेव स्वान्तमासीत् । इदानीं चारु सम्पन्नं भवदीयसाङ्गत्यं, तदपि विशेषतः श्रीनेमिदृष्टौ । ततो यशोवीरो व्याहरति—

श्रीमत्कर्णपरम्परागतभवत्कल्याणकीर्तिश्रुतेः
प्रीतानां भवदीयदर्शनविधौ नास्माकमुत्कं मनः ।

श्रुत्यप्रत्ययिनी सदा ऋजुतया स्वालोकविश्रम्भिणी
दाक्षिण्यैकनिधान ! केवलमियं दृष्टिः समुत्कण्ठते ॥ ८८ ॥

इत्याद्याः सङ्कथाः पप्रथिरे। प्रासादबिम्बप्रतिष्ठोत्सवाः संवृत्ताः। श्रीवस्तुपालेनैकदा चैत्यस्य दूषणभूषणे पृष्टो यशोवीरः प्रोचे। देव! शोभनदेवः सूत्रधारः शोभनः। ततो युक्तमेतदम्बा कीर्तिस्तम्भोपरिस्थिता एकाभङ्गुलीमूर्ध्वीकृत्य स्थिता घटिता। परमः प्रासादः। परं दोषा अपि सन्ति। प्रासादापेक्षया सोपानानि ह्रस्वानि। स्तम्भे बिम्बानि आशातनाभाजनं स्युः। द्वारप्रवेशे व्याघ्ररूपाणि पूजाऽल्पत्वाय स्युः। जिनपृष्ठे पूर्वजरोपणा पाश्चात्यानामृद्धिनाशिनी। आकाशे जैनमूर्तिरोपणा त्वस्परं दर्शनपूजनाल्पत्वाय। इत्यादि श्रुत्वा सत्यं मत्वा न चुकोप, भवितव्यतां चाप्रतिकारां निश्चिक्ये। विविधदानैर्विक्रमादित्य इव प्रकाश्य महिमानं, विसृज्य स्वस्थाने लोकं, सपरिजनो धवलक्ककं गत्वा सुखं तस्थौ।

इतश्च श्रीवीरधवलस्य द्वौ पुत्रौ स्तः। एको वीरमः, द्वितीयो वीसलः। तत्र वीरमो यौवनस्थः शूरेषु रेखां प्राप्तः, यो वर्षाकालेऽकस्मादुपरि पतन्त्या विद्युत उद्देशेन कृपाणीमाकृषत। स एकदा क्वचिदेकादशीपर्वणि धवलक्ककमध्यतरुतलमगमत्। तत्र पर्वण्यसौ रीतिः। वैष्णवैः सर्वैरष्टोत्तरशतं बदराणामामलकानां वा द्रम्माणां वा मोक्तव्यम्। तरोरधः वीरमेणाष्टोत्तरं शतं द्रम्माणां मुक्तम्। एकेन तु वणिजा तस्यामेव सभायां स्थितेनाष्टोत्तरं शतमाब्नां मुक्तम्। वीरमेण तस्योपरि कृपाणिका कृष्टा। रे! अस्मत्तः किमधिकं करोषीति च वदन् वणिजं हन्तुमन्वधावत्। वणिक् नंष्ट्वा वीरधवलाध्यासितां सभामाविशत्। जातः कलकलः। ज्ञातं पारम्पर्यं वीरधवलेन। वणिजि पश्यति वीरमो हक्कितः। का ते चर्या यद्ययं त्वदधिकं करोति, अस्माकं न्यायं न वेत्सि। दूरे भव, पुनर्मे दृष्टौ नागन्तव्यम्। वणिजो मम जङ्गमः कोशो मयि जीवति केनाभिभूयन्ते। इत्युक्त्वा तं वीरमग्रामाख्ये आसन्नग्रामेऽतिष्ठिपत्। स तु कौणिककुमारवत् कंसवत् पितरि द्विष्टो जीवन्मृतम्मन्योऽस्थात्। वीसलस्तु राणश्रीवीरधवलस्य वल्लभः श्रीवस्तुपालस्य च। अत्रान्तरे श्रीवीरधवलोऽचिकित्स्येन व्याधिना जग्रसे। तदा वीरमः स्वसहायैर्बलवान् भूत्वा राज्यार्थी राणकमिलनमिषेण धवलक्ककमागात्। तदैव वस्तुपालेन तं दुराशयं ज्ञात्वा प्रत्युत्पन्नमतित्वादश्वगजहेमादिषु परमासमानुषैः परमो यत्नः कृतः। वीरमः प्रभवितुं न शशाक। धवलक्कके एव स्वे सौधे विपुलेऽवतस्थे। दिनैस्त्रिभिर्वीरधवलो दिवं गतः। लोकः शोकसमुद्रे पतितः। बहुभिश्चितारोहणं कृतम्। मन्त्री तु सपरिजनः काष्ठानि

भक्षयन्नपरापरैर्मन्त्रिभिर्निषिद्धः। उक्तं च देव! त्वयि सति राणपादा स्वयं जीवन्तीव। त्वयि लोकान्तरिते परिपूर्णाः पिशुनानां मनोरथाः, गता गूर्जरधरा। ततो न मृतो मन्त्री। तत उत्थापनदिने मन्त्री सभासमक्षं पठति—

आयान्ति यान्ति च परे ऋतवः क्रमेण सञ्जातमेतदृतुयुग्ममगत्वरं तु।
वीरेण वीरधवलेन विना जनानां वर्षा विलोचनयुगे हृदये निदाघः ॥८९॥

अतीव निःश्वस्य गताः सर्वे स्वस्थानम्। ततश्च मृते वीरधवले तद्राज्यलिप्सुर्वीरमः सन्नह्य गृहान्निर्गमिष्यति यावता, तावता श्रीवस्तुपालेन वीसलकुमारो राज्ये निवेशितः। श्रीवीसलदेव इति नाम प्रख्यापितम्। सर्वराज्याङ्गेषु आसनैरे रक्षा कारिता। स्वयं वीसलं गृहीत्वा साराश्वखुरपुटक्षुण्णक्ष्मापीठोच्छलद्रजःपुञ्जस्थगितव्योमा राजन्यकक्रूरकरवालशल्यभल्लकिरणद्विगुणद्योतितरविकिरणो वीरमसम्मुखो ययौ। दारुणः समरो जज्ञे। वीरमः स्वस्य तेजसोऽनवकाशं मन्यमानो नष्टाश्वसुरेण राजकुलेनोदयसिंहेनाधिष्ठितं जाबालिपुरं प्रत्यन्ग्लीत्। मन्त्री तस्याशयं दक्षतया ज्ञात्वा षोडशयोजनिकान्नरानुदयसिंहान्तिके प्रैषीत्। आख्यापयत् यथाऽमुं राजद्विष्टकारकं जामातृज्ञातेयेन यदि स्वान्तिके स्थापयिष्यसि, तदा तेन राज्यं न जीवितव्यं च। हन्याश्चैनम्। ततो वीरमो जाबालिपुरोद्यानं प्राप्तः। तदा विश्राम्यन्नङ्गरक्षामुत्तारयन् अलसायमान उदयसिंहनियुक्तैर्धनुर्धरैः शरशतजर्जरश्चालनीप्रायकायः कृतः मृतश्च। तस्य शिरो वीसलदेवाय प्रहितमुदयसिंहेन। ततो जातं निष्कण्टकं वीसलदेवराज्यम्। यावन्मात्रं वीरधवलेन साधितं, तावन्मात्रात्किमपि न्यूनं नासीत्। केवलं लब्धप्रसरेण वीसलेन श्रीवस्तुपालो लघुतया दृष्टः।

पुरुषः सम्पदामग्रमारोहति यथा यथा।
गुरूनपि लघुत्वेन सम्पश्यति तथा तथा ॥ ९० ॥

राज्ञा नागडनामा विप्रः प्रधानीकृतः। मन्त्रिणोः पुनर्लघुश्रीकरणमात्रं दत्तम्। एकश्च समराकनामा प्रतीहारो राज्ञोऽस्ति। स प्रकृत्या नीचः। पूर्वमन्यायं कुर्वाणो मन्त्रिवस्तुपालेन पीडितोऽभूत्। स लब्धावकाश उपराजं ब्रूते। देव! अनयोः पार्श्वेऽनन्तं धनमास्ते तद्याच्यताम्। राजाऽपि तावाहूयावादीत्। अर्थो दीयताम्। ताभ्यामुक्तम्। अर्थः शत्रुञ्जयादिषु व्ययितत्वान्नास्ति नः। राज्ञोक्तं तर्हि दिव्यं दीयताम्। मन्त्रिभ्यामभिहितं यद्दिव्यं भवद्भ्यस्तदाऽऽदिश्यताम्। राज्ञा घटसर्पः पुरस्कृतः। लवणप्रसादो निषेधति तदकृत्यम्। न च तद्वचनं राजा शृणोति अभिनवदर्पवशात् तदा सोमेश्वरेणोक्तं काव्यमेकं वीसलं प्रति—

मांसान्मांसलपाटलापरिमलव्यालोलरोलम्बतः
प्राप्य प्रौढिमिमां समीर! महतीं हन्त त्वया किं कृतम्।
सूर्याचन्द्रमसौ निरस्ततमसौ दूरं तिरस्कृत्य य-
त्पादस्पर्शसहं विहायसि रजः स्थाने तयोः स्थापितम् ॥ ९१ ॥

निवर्तितं दिव्यं राज्ञा। अथ कदाचिद्धवलक्कके मन्त्रिणि वसति सति पौषधशालैकास्ते। तस्या उपरितनं पुञ्जकं क्षुल्लकोऽधः क्षिपन्नासीत्। स पुञ्जको वीसलदेवमातुलस्य सिंहस्य याप्ययानारूढस्याधो रथ्यायां गच्छतः शिरसि पतितः। क्रुद्धः स मध्ये आगत्य क्षुल्लकं दीर्घेण तर्जकेन पृष्ठे दृढमाहत्य रे! मां जेठुयकं सिंहं राजमातुलं न जानासीति वदन्स्वगृहं गतः। तं वृत्तान्तं मध्याह्ने मन्त्रिवस्तुपालं भोजनारम्भे उत्क्षिप्तप्रथमकवलं रुदन्नुद्घाटितपृष्ठोऽजिज्ञपत् क्षुल्लकः। मन्त्रिणा अभुक्तेनैवोत्थाय क्षुल्लकः सन्धीर्य प्रस्थापितः। स्वयं स्वकीयपरिग्रहो भाषितः। भो क्षत्रियाः! स कोऽप्यस्ति युष्मासु यो मनोदाहं मे उपशमयति। एकेन राजपुत्रेण भूणपालाख्येनोक्तं देव! आदेशं देहि। प्राणदानेऽपि तव प्रसादानां नानृणीभवामि। छन्नं मन्त्रिणादिष्टं जेठुयावंशस्य राजमातुलस्य सिंहस्य दक्षिणपाणिं छित्वा ढौकय मे। स राजपुत्रस्तथेत्युक्त्वा एकाकी मध्याह्नोद्देशे सिंहावासद्वारे तस्थौ। तावता राजकुलात्सिंह आगतः। राजपुत्रेणाग्रे भूत्वा सिंहायोक्तं मन्त्रिणा श्रीवस्तुपालदेवेनाऽहं वः समीपं केनापि गूढकार्येण प्रेषितोऽस्मि। इतो भूत्वा प्रसाद्यावधार्यताम्। इत्युक्ते स किञ्चित्पराग्भूत्वा यावद्वार्त्तां श्रोतुं यतते तावन्मन्त्रिभृत्येन सिंहस्य करः स्वकरे कृतः, सहसा छुर्या छिन्नः। छिन्नं तं करं गृहीत्वा रे! वस्तुपालस्य भृत्योऽस्मि, पुनः श्वेताम्बरं परिभवेः इति वदन् चरणबलेन पलाय्य भूणपालो मन्त्र्यन्तिकमगमत्, करमदीदृशत्। मन्त्रिणा श्लाघितोऽसौ। स करः स्वसौधाग्रे बद्धः। स्वमानुषाणि परमासनरगृहेषु मुक्तानि। परिग्रहो भाषितः। यस्य जीविताशा स स्वगृहं यातु जीवतु। अस्माभिर्बलवता महावैरमुपार्जितं, मरणं करस्थमेव, जीविते सन्देहः। तैः सर्वैरप्युक्तं देवेन सह मरणं जीवितं च स्थिताः। ततो गोपुराणि दत्त्वा गृहं नरैः स्वावृतं कृत्वा स्वयं स्वसौधोपरि तस्थौ निषङ्गी कवची धनुष्मान्। ततः सिंहस्यापि परिच्छदो मिलितो बान्धवादिर्भूयान्। गत्वा वस्तुपालं सपुत्रपशुबान्धवं हनिष्यामः इति प्रतिजज्ञे। चलितं जेठुयकसैन्यम्। यावद्राजमन्दिराग्रे आयातं कलकलायमानं तत्, तावदेकेन ज्यायसोक्तं राजा विज्ञप्यते। मा स्म सहसात्कारेण तत्कोपोऽभूत्। ततो विज्ञप्तं राज्ञे। राज्ञा वार्त्तां ज्ञात्वा विमृश्य भणितम्। अनपराद्धे वस्तुपालो न पीडयति। किञ्चिद्युष्माभिरन्यायः

कृतः । मन्त्रिणो गुरुरपीदि तस्मात्तिष्ठतामेव वयं स्वयं करिष्यामो यदुचितम् । ततः सोमेश्वरदेवः पृष्टः । गुरो ! किमत्र युक्तं स्यात् । गुरुणोक्तं मां तत्पार्श्वे प्रहिणु । आयतिपथ्यं करिष्ये । प्रहितः सः । प्राप्तो मन्त्रिसौधद्वारम् । प्राप्तो मन्त्र्यनुज्ञया मन्त्रिपार्श्वम् । पुरोहित आह मन्त्रिन् ! किमेतत् । अल्पे कार्ये कियत्कृतं शुभवद्भिर्भवद्भिः । जेठुयका मिलिताः सन्ति । राजाऽपि तद्भागिनेयः क्रुद्धः । शम्यतां येन सन्धिं कारयामि । अथ मन्त्रीशः प्राह मरणात्किं भयम् । गुरुपरिभवो दुःसहः । व्याघृत्तं जग्धं पीतं दत्तं विलसितं यदा तदा । यथा तथा मर्तव्यमेव । इदमेकं मरणमस्तु—

जीवितैकफलमुद्यमार्जितं लुण्ठितं परत एव यद्यशः ।
ते शरीरकपलालपालनं कुर्वते बत कथं मनस्विनः ॥ ९२ ॥

इत्यादि गीर्भिर्मृतिकृतनिश्चयं ज्ञात्वा मन्त्रिणं गुरुर्गत्वा राजानमूचे । राजेन्द्र ! म्रियते एवात्र प्रघट्टके मन्त्री । अग्रेऽपि युद्धे शूरस्तेषु तेषु स्थानेषु । 'तृणं शूरस्य जीवितम्' । ईदृशो योधः क्वचिद्विषमे कार्येऽग्रे धृत्वा घात्यते, नैवं वृथा । बहुधा भवतामुपकारी । स किंप्रभुर्यो भृत्यानां छिद्रान्मन्तूंश्च सहते । अस्मदादीनामपि मनसि देवस्य कीदृश्याशा भाविनी । इत्यादि दृढं मृदुसारं निगद्य हस्ते कृतो राजा । राजा प्रोवाच । मन्त्रीह धीरां दत्त्वा सन्मान्य समानीयताम् । गतो गुरुस्तत्र । राजोक्तमुक्त्वा नीतो मन्त्री, परं सन्नद्धबद्धः । राज्ञा विविधतदुपकृतिस्मृत्यार्द्रनयनमनसा पितृवदुपशमितो मन्त्री । मातुलाः पादयोर्लगिताः । स मन्त्रिच्छेदितः सिंहहस्तो लोके दर्शितः बहु राजलोकः । यो मन्त्रिदेवगुरुहन्ता तस्य प्राणान्हरिष्यामः । इत्युक्त्वा जिनमतस्य मन्त्रिणश्च गौरवमवीवृधत् श्रीवीसलदेवः । अथ विक्रमादित्यात् १२९८ वर्षे प्राप्तम् । श्रीवस्तुपालो ज्वररुग्लेशेन पीडितः । तेजःपालं सपुत्रपौत्रं स्वपुत्रं च जयन्तसिंहमभाषत । वत्साः श्रीनरचन्द्रसूरिभिर्मलधारिभिः १२८७ वर्षे भाद्रपदवदि १० दिने दिवगमनसमये वयमुक्ताः मन्त्रिन् ! भवतां १२९८ वर्षे स्वर्गारोहो भविष्यति । तेषां च वचांसि न चलन्ति, गीःसम्पन्नसिद्धित्वात् । ततो वयं श्रीशत्रुञ्जये गमिष्याम एव ।

गुरुर्भिषग् युगादीशप्रणिधानं रसायनम् ।
सर्वभूतदया पथ्यं सन्तु मे भवरुग्भिदे ॥ ९३ ॥
लब्धाः श्रियः सुखं स्पृष्टं मुखं दृष्टं तनूरुहाम् ।
पूजितं दर्शनं जैनं न मृत्योर्भयमस्ति मे ॥ ९४ ॥

कुटुम्बेन तन्मतम् । शत्रुञ्जयगमनसामग्री निष्पन्ना । वीसलदेवो मन्त्रिणा

साश्रुलोचनः समापृष्टः। ततो नागडगृहं मन्त्री स्वयमगात्। तेनासनादिभिः सत्कृतो बभाषे। वयं भवान्तरशुद्ध्ये विमलगिरिं प्रति प्रतिष्ठामहे। भवद्भि-र्जैनमुनयोऽमी ऋजवः सम्यक् रक्षणीयाः क्लिष्टलोकात्।

गौर्जरात्रमिदं राज्यं वनराजात्प्रभृत्यभूत्।
स्थापितं जैनमन्त्रौघैस्तद्वेषी नैव नन्दति॥ ९५॥

इति ज्ञात्वा मन्त्रिनागडेनोक्तम्। श्वेताम्बरान् भक्त्या गौरवयिष्यामि, चिन्ता न कार्या, स्वस्त्यस्तु वः, इति तद्वचसा समतुषत्। अथ चचाल वस्तुपालः। अङ्केवालीया ग्रामं यावत्प्राप। तत्र शरीरं गाढमसहं दृष्ट्वा तस्थौ। तत्र सहायाताः सूरयो निर्यामणां कुर्वन्ति। मन्त्रीश्वरोऽपि समाधिना सर्वं शृणोति श्रद्दधाति। अनशनं प्रतिपद्य यामे गते स्वयं भणति—

न कृतं सुकृतं किंचित्सतां संस्मरणोचितम्।
मनोरथैकसाराणामेवमेव गतं वयः॥ ९६॥
यन्मयोपार्जितं पुण्यं जिनशासनसेवया।
जिनशासनसेवैव तेन मेऽस्तु भवे भवे॥ ९७॥
या रागिणि विरागिण्यः स्त्रियस्ताः कामयेत कः।
तामहं कामये मुक्तिं या विरागिणी रागिणी॥ ९८॥

शास्त्राभ्यासो जिनपदनतिः सङ्गतिः सर्वदार्यैः
सद्वृत्तानां गुणगणकथा दोषवादे च मौनम्।
सर्वस्यापि प्रियहितवचो भावना चात्मतत्त्वे
सम्पद्यन्तां मम भवभवे यावदाप्तोऽपवर्गः॥ ९९॥

इति भणन्नेवास्तमितो जिनशासनगगनमण्डनमृगाङ्कः श्रीवस्तुपालः। तदा निर्ग्रन्थैरपि तारपूत्कारमरोदि। का कथा सोदरादीनाम्। तत्र तेजःपालो विलपति—

आह्लादं कुमुदाकरस्य जलधेर्वृद्धिः सुधास्यन्दिभिः
प्रद्योतैर्नितरां चकोरवनितानेत्राम्बुजप्रीणनम्।
एतत्सर्वमनादरादहृदयो नादृत्य राहुर्हहा!
कष्टं चन्द्रमसं ललाटतिलकं त्रैलोक्यलक्ष्म्याः पपौ॥ १००॥

जयन्तसिंहो वदति—

खद्योतमात्रतरला गगनान्तरालमुद्भावयाः कति न दन्तुरयन्ति ताराः।
एकेन तेन रजनीपतिना विनाऽद्य सर्वा दिशो मलिनमाननमुद्वहन्ति॥१०१॥

कवयः प्राहुः—

मन्ये मन्दधियां विधे त्वमवधिर्वैरायसे चार्थिणां
यद्वैरोचनशातवाहनबलिश्वेताब्जभोजादयः ।
कल्पान्तं चिरजीविनो न विहितास्ते विश्वजीवातवो
मार्कण्डध्रुवलोमशाश्च मुनयः क्लृप्ताः प्रभूतायुषः ॥ १०२ ॥

लोकास्तु वदन्ति—

किं कुर्मः कमुपालभेमहि किमु ध्यायाम कं वा स्तुमः
कस्याग्रे स्वमुखं स्वदुःखमलिनं सन्दर्शयामोऽधुना ।
शुष्कः कामतरुर्यदङ्गणगतश्चिन्तामणिश्चाजरत्
क्षीणा कामगवी व कामकलशो भग्नो हहा! दैवतः ॥ १०३ ॥

ततस्तेजःपालजयन्तसिंहाभ्यां मन्त्रिदेहस्य शत्रुञ्जयैकदेशे संस्कारः कृतः। संस्कारभूम्यासन्नः स्वर्गारोहणनामा प्रासादो [1]नमिविनमियुतः ऋषभसनाथः कारितः। मन्त्रिण्यौ ललितासोखू अनशनेन मम्रतुः । श्रीतेजःपालस्तु अनुपमासहितो मध्यमव्यापारभोगभाक् लेशतस्तथैव दानं तन्वन् १३०८ धामगमत् । शनैः शनैः श्रीजयन्तसिंहोऽपि परलोकमभजत । श्रीअनुपमाऽपि तपसा स्वर्गमसाधयदिति भद्रम् । तयोर्मन्त्रिणोः धर्मस्थानसङ्ख्यां कर्तुं क ईश्वरः, परं गुरुमुखश्रुतं किंचिल्लिख्यते । लक्षमेकं सपादं जिनबिम्बानां विधापितम् । अष्टादशकोटयः षण्णवतिलक्षाः श्रीशत्रुञ्जयतीर्थे द्रविणं व्ययितम् । द्वादशकोटयोऽशीतिर्लक्षाः श्रीउज्जयन्ते । द्वादशकोट्यस्त्रिपञ्चाशल्लक्षा अर्बुदगिरिशिखरे लूणिगवसत्याम् । नवशतानि चतुरशीतिश्च पौषधशालाः कारिताः । पञ्चशतानि दन्तमयसिंहासनानाम् । पञ्चशतानि पञ्चोत्तराणि समवसरणानां जादरमयानाम् । ब्रह्मशालाः सप्तशतानि । सप्तशतानि सत्रागाराणाम् । सप्तशती तपस्विकापालिकमठानाम् । सर्वेषां भोजननिर्वापादिदानं कृतम् । त्रिंशच्छतानि द्युत्तराणि महेश्वरायतनानाम् । त्रयोदशशतानि चतुरुत्तराणि शिखरबद्धजैनप्रासादानाम् । त्रयोविंशतिशतानि जीर्णचैत्योद्धाराणाम् । अष्टादशकोटिव्ययेन सरस्वतीभाण्डागाराणां त्रयाणां स्थानत्रये करणम् । पञ्चशती ब्राह्मणानां नित्यं वेदपाठं करोति स्म । वर्षमध्ये सङ्घपूजात्रितयम् । पञ्चदशशती श्रमणानां नित्यं गृहे विहरति स्म । तटिककार्पटिकानां सहस्रं समधिकं प्रत्येकमभुक्त । त्रयोदश यात्राः सङ्घपतीभूय कारिताः । तत्र प्रथमयात्रायां चत्वारि

(1) The portion from this up to the end occurs in Jinaprabha's Tirthakalpa.

सहस्राणि पञ्चशतानि शकटानां सशय्यापालकानां, सप्तशती सुखासनानाम्, अष्टादशशती वाहनानाम्, एकोनविंशतिः शतानि श्रीकरीणाम्, एकविंशतिः शतानि श्वेताम्बराणाम्, एकादशशती दिगम्बराणां, चत्वारि शतानि सार्द्धानि जैनगायनानां, त्रयस्त्रिंशच्छती बन्दिजनानाम्। तथा चतुरशीतिस्तडागाः सुबद्धाः। चतुःशती षष्ठ्यधिका वापीनां, पाषाणमयानि द्वात्रिंशद्दुर्गाणि, दन्तमयजिनरथानां चतुर्विंशतिः, विंशं शतं सागघटितानाम्। सरस्वतीकण्ठाभरणादीनि चतुर्विंशतिर्बिरुदानि। चतुःषष्टिर्मसीतयः वस्तुपालस्य। दक्षिणस्यां श्रीपर्वतं यावत्, पश्चिमायां प्रभासं यावत्, उत्तरस्यां केदारपर्वतं यावत्, पूर्वस्यां वाणारसीं यावत्तयोः कीर्त्तनानि। सर्वाग्रेण त्रीणि कोटिशतानि चतुर्दशलक्षा अष्टादशसहस्राणि अष्टशतानि द्रव्यव्ययः। त्रिषष्टिवारान् सङ्ग्रामे जैत्रपदं गृहीतम्। अष्टादश वर्षाणि तयोर्व्यापृतिः।

श्रीवस्तुपालतेजःपालयोः प्रबन्धः समाप्तः।

---

प्रशस्तिः—श्रीप्रश्नवाहनकुले कोटिकनामनि गणे जगद्विदिते।
श्रीमध्यमशाखायां हर्षपुरीयाभिधे गच्छे॥ १॥
मलधारिबिरुदविदितश्रीअभयोपपदसूरिसन्ताने।
श्रीतिलकसूरिशिष्यः सूरिः श्रीराजशेखरो जयति॥ २॥
तेनायं मृदुगद्यैर्मुग्धामुग्धावबोधकामेन।
रचितः प्रबन्धकोशो जयताज्जिनपतिमतं यावत्॥ ३॥

तथा—कट्टारवीरदुस्साधवंशमुकुटो नृपौघगीतगुणः।
बब्बूलीपुरकारितजिनपतिसदनोच्छलत्कीर्त्तिः॥ ४॥
बप्पकसाधोस्तनयो गणदेवोऽजनि सपादलक्षभुवि।
तत्सूनूर्नूनकनामा तत्पुत्रः सोढको दृढधीः॥ ५॥
तत्सूनुः सामन्तः स्वकुलतिलकोऽभवज्जगत्सिंहः।
दुर्भिक्षदुःखदलनः श्रीमहमदसाहिगौरवितः॥ ६॥
तज्जो जयति सिरिभवः षट्दर्शनपोषणो महणसिंहः।
ढिल्ल्यां स्वदत्तवसतौ ग्रन्थमिमं कारयामास॥ ७॥
शरगगनमनुमिताब्दे १४०५ ज्येष्ठामूलीयधवलपञ्चम्याम्।
निष्पन्नमिदं शास्त्रं श्रोत्रध्येत्रोः सुखं तन्यात्॥ ८॥

---

# INDEX OF HISTORICAL NAMES IN THE VASANTAVILÂSA

# INDEX OF GEOGRAPHICAL NAMES IN THE VASANTAVILÂSA

## NOTES.

**P. 4. l. 3 मोढेरक**—is the modern town of Modhera in Kadi District. The account of the author's गृहस्थाश्रम given in the following verses is not to be found in any other work of the author.

P. 4. l. 30. हरिभद्र was the Guru of Bâlachandra. The lineage of Bâlachandra is given at length in his commentary on the Upadeśa Kandalî of Âsada. In the Chandra Gacchha, there flourished Pradyumna Sûri who administered religious advice to the king of Talavâtaka. Chandraprabha Sûri who succeeded him composed a morning hymn to Jina. After him, came Dhaneśvara who got the mantra from his deceased Guru and instructed the goddess of Samayû Town. He had four pupils Vîrabhadra, Devasûri, Devabhadra and Devendra Sûri like the four hands of Sarasvatî. The last Devendra Sûri who stayed in Mandalî Town which abounded in Jain temples performed the installation ceremonies of the temple of Lord Mahâvira at Mandalî. He with his own hand made Bhadreśvara Sûri of imperishable fame his successor. Abhayadeva Sûri who vanquished disputants succeeded him. It was after drinking the nectar of his religious instructions that Âsada composed his Vivekamanjarî and Upadeśa Kandalî. His pupil Haribhadra Sûri was well versed in six schools of philosophy and literature.

*cf.* श्रीवीरसेन इति वज्रमुनीश्वरस्य पट्टे बभूव दशपूर्वधरस्य पूर्वम् ।
शाखा य एष जिनशासनकल्पवृक्षस्कन्धो दिगन्तरततीः सुषुवे चतस्रः ॥ १ ॥
शाखाङ्कुरा गणभृतोऽत्र बभूवुरेते नागेन्द्र इत्यमलकीर्त्तिनदीनगेन्द्रः ।
चन्द्रश्च सान्द्रमतिभागथ निर्वृतिश्च विद्याधरश्च भुवि विश्रुतनामधेयः ॥ २ ॥
एतेषु चन्द्र इति यः प्रबभूव सूरिस्तस्य प्रफुल्लगुणगच्छवनस्य गच्छे ।
भूयांस एव भुवनत्रयवन्दनीयाः सञ्जज्ञिरे गणधरा गुणिनो धरायाम् ॥ ३ ॥
प्रद्युम्नसूरिरिति तेषु रतिप्रियस्य भेत्ता बभूव निखिलागमशास्त्रवेत्ता ।
येन प्रबोध्य तलपाटपुरे नरेन्द्रमुत्पाटयां तलत एव कलिर्बभूव ॥ ४ ॥
श्रीचन्द्रगच्छनवकैरवकेलिचन्द्रश्चन्द्रप्रभः प्रभुरभिज्ञतमस्ततोऽभूत् ।
यो विश्वलोकविदितं मुदितान्तरात्मा प्राभातिकीं जिनपतिस्तुतिमाततान ॥ ५ ॥
तस्माद्धनेश्वर इति श्रुतपारदृश्वा विश्वाभिरामचरितोऽभ्युदियाय सूरिः ।
यो मन्त्रमाप गुरुतः सुरभूयभाजः प्राबोधयच्च समयूपुरदेवतां यः ॥ ६ ॥
तस्याभितः समभवन् भुवनप्रशस्याः शिष्याः श्रुताब्धकमलोद्धरणप्रवीणाः ।
चत्वार ऊर्जितरुचो विदुषां निषेव्या देव्याः करा इव पुराणकविप्रसूतेः ॥ ७ ॥
श्रीवीरभद्र इति सूरिरमीषु मुख्यः श्रीदेवसूरिरिति भूरिगुणो द्वितीयः ।
श्रीदेवभद्र इति सूरिवरस्तृतीयो श्रीशान्तिसूरिरिति च प्रथितश्चतुर्थः ॥ ८ ॥
श्रीमण्डलीति नगरी नगरीति कृतप्रासादसंहतिरितोऽस्त्यमरावतीव ।
देवेन्द्रसूरिसुगुरुर्विततान तस्यां तद्वासिनां च हृदि मूर्ध्नि च वासलक्ष्मीम् ॥ ९ ॥

प्रातिष्ठिपन्निजपदे स विनिद्रभद्रे भद्रेश्वरं प्रभुमनश्वरकीर्त्तिपूरम् ।
आख्यामनङ्ग इति सङ्गतवान् यदीयध्यानानले मदनवन्मदनो विलीय ॥ १० ॥
तत्पट्टमौलिमणितामभजद्दयार्त्तिभीतात्मनामभयदोऽभयदेवसूरिः ।
पापातपापगममन्वहमातपत्रीभूयाङ्गिनां शिरसि यस्य करश्चकार ॥ ११ ॥
तत्पट्टपर्वतमलङ्कुरुते स्म कर्मव्यालावलीहरिभुवा हरिभद्रसूरिः ।
भूम्ना यदीयचरणोपनतैरशोभि मुक्ताफलोज्ज्वलतमैर्जगती यशोभिः ॥ १२ ॥
शिष्यस्तस्य विभोर्नमस्यचरणाम्भोजस्य जज्ञे महान्
साहित्योपनिषन्नभोऽङ्गणरविः श्रीबालचन्द्रः कविः ।
यं स्वप्नान्तमुपेत्य तद्दृढतरानुध्यानतुष्टा जगौ
मत्पुत्रस्त्वमसीति शीतलगिरा देवी गिरामीश्वरी ॥ १४ ॥

बालचन्द्र—उपदेशकन्दलीवृत्ति

*cf.* also नटः—मारिष ! श्रीदेवेन्द्रगुरुस्वहस्तस्वपदनिवेशितस्य भुवनभद्रङ्करस्य श्रीभद्रेश्वरसूरिसुगुरोः पट्टनभस्तलालङ्करणकिरणमालिना प्रतिवादिदितितनयदमनशौरिणा श्रीमदभयदेवसूरिणा निजकरतामरसप्रतिष्ठितानप्रतिमप्रतिभाभरसौरभदुर्भगीकृतत्रिदशसूरीन् श्रीहरिभद्रसूरीनभिजानासि ? ।

**सूत्रधारः**—( साक्षेपम् )

साहित्याम्बुधिबन्धुराममतितरां षट्तर्कखण्डान्वितां
नानालक्षणदुर्गदुर्गमतमां विद्यामनन्तामपि ।
सच्चक्रेण समाश्रिताः सुकृतिनो ये साधयन्ति स्म ता-
नेकः को मुनिचक्रवर्तिन इह क्षोणीतले वेद न ॥ १० ॥

अपरं च—

विलसदमृतद्वेगा येषां वचःप्रचयं पपुः
सपुलकवपुःस्तम्भा जम्भान्तिकादिसुराः पुरा
तदपलपने ते वर्तेरन्नथापरया कथं
न विधुरधुना तत्पुण्याकः स चेद्भुवने भवेत् ॥ ११ ॥

अपि च—

यत्कीर्त्तिगौर्येण मिथोऽप्यलक्ष्यौ गौरीगिरीशौ दिवि गौरकान्ती ।
करप्रपञ्चैर्मिलितौ वियोगभीत्यार्द्धनारीश्वरतां प्रपन्नौ ॥ १२ ॥

बालचन्द्र—करुणावज्रायुध Act I

भद्रश्रीहरिभद्रसूरिसुगुरोः षट्तर्कविद्याविदः
शिष्यः श्रीश्रुतदेवतासुत इति ख्यातः प्रबन्धं व्यधात् ।
श्रीवज्रायुधचक्रवर्तिचरितव्याहारवैतालिकं
विद्वत्कर्णरसारसायनममुं श्रीबालचन्द्रः कविः ॥ १ ॥ Ibid Act V

also गूर्जरवसुन्धरावदनमण्डलीनगरमण्डनश्रीमहावीरचैत्यप्रतिष्ठाकृतः सुकृतचरितचमत्कृतदेवेन्द्रस्य श्रीदेवेन्द्रगुरुस्वहस्तपदविनिवेशितस्य भुवनभद्रङ्करस्य श्रीभद्रेश्वरसूरिसुगुरोः पट्टनभस्तलालङ्करणकिरणमालिना प्रवादिदैत्यदमनशौरिणा श्रीमदभयदेवसूरिणा ।

विवेकमञ्जरीवृत्ति